थींचग्रामंग्रामायवाव्रजेत् क्रियायोगेप्ययोगेपिप्रथमावच
नानिच २४ राजानदीजलंत्वेषुप्रथमैवक्रियानदि त्र
यः कालाःप्रयोगेतुक्रियानादृक्प्रदीयताम् २५ सम्बो
धनंचहेभोभ्यांज्ञायतेप्रथमैवहि
अथभावविचारः धात्वर्थस्त्वत्रभावोस्तिभवनंभावएव
वा २६ धात्वर्थएवभावाख्योकर्म्मकस्यलगोभवेत्
तिङ्वाच्यभावनायास्तुसत्वरूपतयास्थितेः २७ भाव
वाचितिङन्तेतुस्यादेकत्वंचसर्वदा द्वित्वाद्यप्रत्ययाच्चा
पिभाष्यादेकत्वमिष्यते २८ घटेनभूयतेगेहे घटाभ्यां
भूयतेतथा घटैस्तुभूयतेत्येवंद्वित्वाद्यंनक्रियागतम् २९
कर्त्रादीनांतुयत्रस्यात्सामानाधिकरण्यकम् लकारार्थे
नतत्रैवस्यात्कर्त्रादिगतताचया ३० संख्यानद्बोधकंचस्या
दाख्यातमितिनिश्चयः सामानाधिकरण्यंचतत्कर्त्रादिनिरू
पितम् ३१ लकारार्थेननोभावेदृश्यतेयतएवहि त
स्मादाख्यातगेभावेनैवद्वित्वादिकंभवेत् ३२।

अथकर्तृकर्म्मक्रियाविचारः

कार्य्यादीनांययोत्पत्तिःसव्यापारप्रवृत्तिका साक्रियाक
र्तृनिष्ठास्तिसैवस्यात्कर्म्मबोधिका ३३ क्रियायांत्र
चनंकर्तृकर्म्मणोःलिंगसंख्यके कर्त्तरिप्रथमायत्रद्विती
यातत्रकर्म्मणि ३४ कुंभकलालःकुरुतेकर्तृवाच्यक्रि
यास्तिसा कर्मणिप्रथमायत्रतृतीयाचास्तिकर्त्तरि क
र्मक्रियापदंतत्रस्यात्तिङन्तमितिबुध्यताम् कर्त्तृव्यापारि
काचापिविवक्षानेष्यतेयदा ३५ व्यापारेस्वेचकर्म्मादेः
स्वातंत्र्यात्कर्म्मणायदा ओदनःपच्यतेत्रास्तिकर्तृवत्क
र्मणिस्फुटा ३६ क्रियाकर्मप्रधानाचेत्कर्तृसंख्याविवक्ष

या क्रियते एवं कुलालेन कुलालाभ्यां नयात्वतैः ३८ छिन
त्ति चासिना त्रासि मथमासिः छिन्नत्यापि किञ्चित्प्रयोजनाद
त्रप्रक्रियाविषयो मया ३९ दर्शितोन्यद्विशेषेणतिङ
न्तविषये स्थितम् कर्मकर्तृक्रियार्थेः स्यात् वाक्यार्थः स
विशेषणैः क्रियाविशेषणेचायं द्वितीयावचनं भवेत्
लिंगं नपुंसकं च स्यात् अन्यत्र तु विवक्षया ४१ ।

## अथ विशेष्यविशेषणभावः

विशेष्यो वस्तुवाची स्यात् तद्गुणं तु विशेषणम् विशेष
णो विशेष्यस्य लिंगसंख्याविभक्तयः ४२ भवंति ध्वज
द्व्लिंगत्वकाः सर्वत्र निश्चयः मुख्यो गौणो लाक्षणिकः
प्रयोगस्त्रिविधो भवेत् ४३ मुख्यं ज्ञानं भवेन्मुख्यो वि
शेषणपदं विना विशेषणैर्विशेष्यस्य ज्ञानं गौणत्वकार
कम् ४४ यथा क्रोधगुणाद्गौणो रामक्रोधो विषं मह
त् सिंहो माणवकस्तत्र लाक्षणीको बलादिना ४५
अस्मात्मदादिदं बोध्यमिती च्छा शक्तिरिष्यते शक्तं पदं
च तद्धीतु यौगिकं रूढमित्यपि योगरूढं तथा ज्ञेयं यौगि
कं रूढमेव च लक्षणा सक्यसंबंधस्तात्पर्यानुपपत्ति
तः ४६ वक्तुश्चाभीप्सितो ह्यर्थः शक्यार्थो लक्षणास्थ
ले जहत्स्वार्था जहत्स्वार्था भेदतो लक्षणा द्विधा ४८
गंगायां घोष इत्युक्तो तीरे सा लक्षणा मता स्वार्थरूपम
वाहस्यत्यागात्तीरे स्थिता यतः ४९ द्वितीया कुन्तिणो यां
ति काशीमन्येपि बुध्यते रक्तं दधिकाकेभ्यो द्वितीया ल
क्षणात्र च ५० रक्षणं स्मादिकेभ्योपि ज्ञायते काकरक्ष
णात् लक्षणाविषयो लक्ष्यो व्यंजनात् पृथक्कृतः
५१ ॥

## अथ द्वितीया

क्रियोद्देश्यं भवेत्कर्म्म द्वितीया तत्र जायते जलं पिबति दुग्धं च
जले दुग्धे च कर्म्मता ५२ जलदुग्धे क्रियोद्देश्ये पानक्रिया
निरूपिते सप्तकर्म्माण्यकथितानीप्सिताभिहितेप्सिताः ५३
ईप्सितानीप्सितं कर्त्र्याख्यमनभिहितं तथा गां दोग्धि च पयो
गोपः कथितं तत्र विद्यते ५४ विषं भुङ्क्ते हमेज्यापि ग्रामं
गच्छंस्तृणं स्पृशन् अनीप्सितमिदं कर्म्म ज्ञायते तत्र निश्च
या ५५ कटः क्रियते तेनाऽभिहितं तत्प्रदर्शितम् ई
प्सितं त्विदमेवास्ति ज्ञातं सद्बुध्यते बुधः ५६ ईप्सितानी
प्सितं मुद्गांश्चोरयति विमूढधीः कर्तृकर्म समाख्यातं गुरुः
शिष्यं च प्रेषते ५७ शिष्यो ग्रामं तु यात्येव शिष्यः कर्त्ता
पि कर्म्म च उत्पाद्यं संस्कार्य्यं च विकार्य्यं प्राप्यमेव च ५८
चतुर्धात्र विकार्य्यं तु द्विधा भवति भेदतः प्रकृतेर्नाशकं चा
पि गुणान्तरकं तथा ५९ भेदापत्तेपि सर्वेषामन्तर्भूताः
पृथक् स्थिताः कटं करोति कारूकः उत्पाद्यं त्विदमेव हि ६०
दीक्षां प्राप्नोति सच्छिष्यः संस्कारोत्र तु दीक्षया काष्ठं भस्म क
रोत्यत्र विकार्य्यं प्रकृतेर्हरम् ६१ मृदं घटं करोत्यत्र गु
णान्तरकं मतम् ग्रामं प्राप्नोति ग्रामीणः प्राप्यं कर्म्मात्र बु
ध्यते ६२ क्रियाविशेषणं कर्म्म नपुंसकमपीष्यते य
थानिःशंकमतिक्षिप्रं लंकां रामोवलोकते ६३ ऋतेवि
नासमायोगे द्वितीयाऽत्र जायते कालाध्वनोश्च वीप्सा
यां हान्तरेणान्तरोऽपरि ६४ अभितः परितश्चापि निकषा
समयाभिधेक प्रत्यन्वाधिगताश्चस्यात् सर्वोभयतसोरपि
६५ ऋते बुद्धिं न बोधः स्याद्विना ज्ञानं सुखं न हि आ
वालं हरिभक्तिः स्यान्मासं द्वौ क्रोशमापगा ६६ वारेवारं

न्सोऽहनिरूपितान् ८२
गतिबुद्ध्यर्थभक्षार्थाकर्म्मकाश्शब्दकर्मकाः येधातवोऽत्रस
न्त्येषाम्प्रयोज्यकर्मसञ्ज्ञकः ८३ समादिष्टोऽथतेषांयेप्रयो
गाः पूर्वदर्शिताः तानेवोदाहरिष्येऽत्रकारिकारूपकायतः ८४
शत्रूनगमयत्स्वर्गंवेदार्थंस्वानवेदयत् आशयच्चामृतन्दे
वान्वेदमध्यापयद्विधिम् ८५ आसयत्सलिलेपृथ्वींयस्स
मेश्रीहरिर्गतिः गत्यर्थयोर्नीवह्योस्तुप्रतिषेधःप्रदर्शितः ८६
सूतकर्तृवहेस्तत्रप्रतिषेधोनविद्यते अहिंसार्थस्यभक्षेश्चप्र
योज्यःकर्मनोभवेत् ८७ यत्यादीनान्दृशोश्चापिप्रयोज्यःक
र्मतामियात् हृक्रोर्वास्याज्जयानड्वान्दृशोऽभिवदेऽपि ८८
भारंवाहयतेऽनन्त्यैस्तच्छापयतिनैःपुनः सूतोवाहयतेचोदरथं
भक्षयतेगरम् ८९ महेशोनाययमनुजान्कालन्नित्यमिति
स्थितिः पुत्रंजल्पयतेभाषयतेचैनोहरिस्तथा ९० भक्ता
न्दर्शयतिस्वैस्वांस्तथाहारयतेहरान् कटान्कारयतीम्स्चै
वाभिवादयतेगुरून् ९१ दर्शयतेंद्विवालेनवालंवापीतिभाव
य कर्मणोदाहृताह्येतेप्रयोगाश्चार्थसाधकाः ९२ काला
ध्वनोर्हिनीयास्यात्संयोगातिशयेसति मासंपचतिमाषान्न
क्रोशंधावाश्वोदति ९३ अधीतेमासमत्रापिक्रोशमद्रि
श्चवर्त्तते नदीवहतिवक्रापिक्रोशमित्यादिकम्भवेत् ९४

## अथतृतीया

सहायकंतुकारणंयद्व्यापारादनन्तरम् क्रियासिद्धिर्भवेत्त
त्तृतीयायुक्तकेमता कुठारेणच्छिनत्त्येधःकुठारोऽत्रस
हायकः बाह्यमाभ्यन्तरंचेतिकारणंद्विप्रकारकम् चक्षु
षापश्यतिग्रामंगंगांचमनसास्तिमं साकंसार्द्धंसहालंकिं

न्वयोऽपिज्ञेयंवर्जनेशास्त्रसम्मतम् दरिद्रायधनंदत्तेदरिद्रे संप्रदानता संप्रदानंत्रिधाज्ञेयंप्रेरकंचानुमन्तृच अनिराकर्तृकंचेतिदाधातोर्विषयेस्फुटम् याचनेगोस्तुविप्रायदानंप्रेरकमुच्यते अयाचनेतुयद्दानमनुमन्तृतदुच्यते निषेधाभावकंदानमनिराकर्तृसंज्ञकम् प्रतिश्रयेफलंदत्तं सदेहीतियाचने देव्यायस्त्रर्जयेमालादानेदेवीनरोधति नमोरामायपुत्रायसलिलादाग्नये भवेत् स्वधापित्रेवषट्वौषट्स्वोलं तु नमायच सह्योहितनिमित्तार्थेस्वामार्थंजलमानय मह्येह्यायमुभंभूयादाशिषादौ चदृश्यते ह्रायेरोचतेभक्तिर्गोपीकृष्णायश्लाघते कृततिष्ठतिशपतेनस्मैवापिविभावय शान्त्यायतिमह्यंसमोतमभक्तायवादरिः पुष्पेभ्यश्चस्पृहयतेदैत्यः क्रुध्यति विष्णवे उह्यतीर्ष्यतिवातस्मायसूयतिविगर्हति गर्गोराध्यतिकृष्णायहोत्रेसोऽनुगृणातिच शानायशसरिकीतोयुरूपैसेवतेहरिम् सानायजायतेभक्तिःकल्पतेप्रभुपतिहृते फलेभ्योयातिभिक्षुस्तपागायचमहीपतिः तृणायमन्यतेनत्वाकृणामन्यतइत्यपि शुनेश्वानंचत्वामन्येनावमन्तव्यमन्यते ॥

## अथपंचमी

अपादानम्भवेत्सोऽत्रविश्लेषेयोवधिर्ध्रुवम् विभक्तिःपंचमीतत्रग्रामाद्यातिबुधोयथा चलाचलविभिन्नंतदेकादशाविधंपुनः धावतोस्त्वचलंपातेस्यावराद्चलंभवेत् भयमादानजुगुप्सितःपराजयजगुप्सके प्रमादत्राणविश्लेषाविरामान्तर्द्धिवारणाः व्याघ्राद्बिभेतिवैबाल आदत्तेच

धनं विभोः पितुः संजायते पुत्रः करीसिंहात्पराजितः या पाज्जुगुप्सते विद्वान् नीचोधर्मात्प्रमाद्यते आच्छादयतिगां शूरः इत्तान्पर्णं पतत्यधः सूरिर्विस्मेतेपापादंतर्धत्तेगु रोर्वटुः यवेभ्योवारयतिगामध्यापनेंक्रमात्मतम् भिन्ना न्यारथगादीनांयोगेपिस्यात्तुपंचमी गोपालाधीवराद्भि नाःशूद्रास्तेषांसमामताः प्रावरात्तुरथकृतेभ्यःनूना स्तेभ्योन्त्यजास्तथा। इतिपञ्चमी

## अथषष्ठी

षष्ठीसम्बन्धमात्रस्याकर्तृत्वेनविवर्जिता भ्रातावैत्रस्य चायंवैसंबंधश्चैत्रगोमतः संबंधगातुषष्ठोषाविवक्षा वशात्तोद्वयोः संबंधस्योभयस्थत्वात्तुभयपदादिजायते निर्द्धारणेयथासास्यात् सर्वेषांगुणवान्वरः राजास्य पुरुषस्यायंराज्ञोभृत्यस्त्वभक्तिमान् प्रयोगभेदज्ञाज्ञे याषष्ठीतूभयगावसा द्वितीयार्थेपिषष्ठ्यास्तु कारकत्वं यथात्वद्धि प्राणोर्दिनान्हिप्रपुरोपंमातुःस्मरतिचेत्यपि कु त्रचित्द्वितीयायाःकारकत्वविवर्जिताः यथातास्तत्र विज्ञेयाःद्विमार्ष्टिंदत्तिणेनतु जरामिलायसाश्चात्रपा कायस्यालिकायथा धूमाद्ङ्क्तिश्रभोधीरचर्म्मं गीही पिनंततः पातिवज्ञापतेचालितुध्यतेद्वंतिपंचभिः क्रि याभिश्चामयुक्ताभिःकारकत्वंनचान्यथा॥

## अथसप्तमी

अधिकरणमाधारःसप्तमीतत्रजायते क्रियाज्ञाप्यप दार्थानांविषयेसाचदृश्यते पतनप्रतिबंधार्थमाधारं

तं विद्वुधाः तत्राधिकरणं ज्ञेयं षड्विधं नाम भेदतः सामीप्यो
व्यापकश्चैव वैषयिकौपचारिके औपश्लेषिकनैमित्तकश्चैतत्
तु षड्विधम् गंगांघोषोहृदिब्रह्म सामीप्यमिदमीरितम् व्या
पकं तु तिले तैलं वैषयिकं वने मृगाः ॥

ताराणां कराग्रे तदौपचारिकसंज्ञकम् गुहे सूरस्थितिर्य
स्यान्नैमित्तकमिदं मतम् कटे शेते कुमारोसावौपश्लेषिक
संज्ञकम् निर्द्धारणे निमित्ते च सति सत्यर्थगापि च पंडिते
षु कविः श्रेष्ठः निर्द्धारणमिदं मतम् चर्मणि द्वीपिनं हंति नि
मित्तार्थे त्र सामता सत्सु सन्तेषु तो दुःखमित्यादौ सति सप्त
मी विद्यमाने गवां गोष्ठे सत्यर्थोऽस्पत्र किं पुनः

श्लोको यथा

चर्मणि द्वीपिनं हंति दंतयोर्हंति कुंजरं
केशेषु चमरीं हंति सीम्नि पुष्कलको हतः
नाभिकोशात्र सीमास्यात् गंधमृगस्तु पुष्कलः

### अथ मिश्रितार्थाः विभक्तयः ॥

तृतीया पंचमी हेतु भये हर्षे च सम्मते हर्षाद्धर्षेण वा याति
भयाद्भयेन कम्पते प्रभवतीति योगेस्तः चतुर्थी षष्ठि के चेत्
तस्य प्रभवतीति स्यात् तस्मै प्रभवतीति च विना पृथक् द्वयो
र्योगे द्वितीया तृतीये च पंचमी भक्तिं विना हृथा जन्म पुत्रेण च वि
ना कुलम् विनाशुणान्धमानं स्यात् सर्वलोकमतं त्विदम्
पृथक् कुठारमेधोत्र कुठारेण पृथक् कृतम् कुठाराच्च पृथक्

ज्ञातमिंधनंसमुपार्जितम् ऋतेयोगेद्वितीयास्यात्
पंचमीचापिजायते ऋतेबुद्धिंनबोधःस्यादृतेज्ञाना
न्सुखंनहि चतुर्थीसप्तमीहेतुनिमित्तार्थेप्रकीर्त्तिते
यज्ञायचपशुर्बद्धः यज्ञेवापशुबंधनम् समानार्थ
कशब्दानांयोगेषष्ठीतृतीयके सप्तमःसदृशास्तस्या
धनस्यचधनेनवा तेयेनिर्द्धारणेहेतु सप्तमीषष्ठि
काभिधे सर्वेषांगुणवान्श्रेष्ठः सर्वेषुगुणवान्वरः
तुष्टापोपैश्चभोगेन तृतीयाषष्ठिकेचते तस्यतुष्ट
श्चतेनैवतेनतस्यापमानितः तेनतस्योपयुक्तं
स्यात्तस्यभोगोस्तुतेनवा तृतीयापञ्चमीषष्ठी
कारणेस्युर्विभक्तयः कुठारेणछिनत्त्येधः स्तोका
न्मुक्तोभवेत्तया कारणेषष्ठिकामित्रंसज्ञानीते
तृतस्यच तृतीयार्थोत्रसर्वत्ररूपाणामेवमेदता
तृतीयातुर्यकाषष्ठीसम्प्रदानेतथात्रिधा दास्याः
संयच्छतेमालांदास्यैचेत्यर्थबोधनम् क्षुधिताय
वदान्यन्नंसम्प्रदानेचतुर्थिका बलिश्चन्द्रमसेदेयो
त्वार्घ्यश्चन्द्रमसेपिच सम्प्रदानेतुहेतेयेकालानि
यतकेक्रये चतुर्थीचतृतीयाचशतेनचशताय
च ऊर्ध्वमिन्नेतुगत्यर्थेकर्मणिद्वेविभक्तिके
द्वितीयाचचतुर्थीचग्रामंग्रामायवाव्रजेत्॥

इतिविभक्त्यर्थाः

# अथसमासाः

पदानांपदयोर्वापिचैकपद्यंसमासता विभक्तिलोपत
श्चांतेविभक्तिर्जायतेपुनः तत्पुरुषोबहुव्रीहिःकर्मधा
रयएवच द्विगुर्द्वंद्वाव्ययीभावाःसमासाःषट्प्रदर्शिताः
अत्रार्थेकस्यचित्पुंसोराजानंस्वार्थबोधने द्वंद्वोद्विगुरपि
चाहंमद्गेहेनित्यमव्ययीभावः तत्पुरुषकर्मधारय
येनाहंस्यांबहुव्रीहिः चार्थेद्वंद्वःसमासस्स्यादभेदे
कर्मधारयः अन्यार्थेतुबहुव्रीहिःनादौतत्पुरुषेप्रथा
नित्योनित्यालुगन्योत्तुक् केवलोथनञ्चच मध्यमप
दलोपीचोपपदोह्येकशेषकः लौकिकोलौकिकश्चापि
षण्णांभेदाइमेपिच. समासेषुचप्राधान्यंचतुर्धाविद्य
तेस्फुटम् पूर्वोत्तरोभयान्यार्थैर्भेदैर्लक्ष्यानुरोधतः
द्वंद्वैकशेषद्विगवःप्रायःस्युर्हिप्रधानकाः द्विगुर्नञ्
मध्यलोपीचकर्मधारयएवच अव्ययीभावकेपूर्व
प्रधानंबहुधोत्तरं तत्पुरुषस्यविज्ञेयंबहुव्रीहावप्रा
धान्यकम्॥

## अथतत्पुरुषः

विभक्तिनाम्नाचनञाद्यष्टौतत्पुरुषामताः प्रथमादीं
तिमेशब्देनादौतत्पुरुषेभवेत् प्रथमादौक्वचिद्धापिपू
र्वकायःसमासके पूर्वकायःप्रयोगादौप्राधान्यपूर्वके
क्वचित्

प्रथमातत्पुरुषोयथा

पूर्वःकायस्य पूर्वकायः

अर्द्धं पिप्पल्याः अर्द्धपिप्पली
द्वितीयं भिक्षायाः भिक्षाद्वितीयं
एवं त्नीयान्तर्यादि शब्देष्वपि समासः
मासोजीविकां मासजीविकः
आपन्नोजीविकां आपन्नजीविकः
द्वितीयान्तत्पुरुषोयथा कृष्णंश्रितः कृष्णश्रितः नरकंपतितः नरकपतितः ग्रामंगतो ग्रामगतः सुखम् आपन्नः सुखापन्नः
त्नीयान्तत्पुरुषोयथा शंकुलयाखंडः शंकुलाखंडः शंकुलाखंगकर्त्तरी मासेन पूर्वः मासपूर्वः
कुठारेणछिन्नः कुठारछिन्नः वाचानिपुणो वाङ्-निपुणः
चतुर्थीतत्पुरुषोयथा यूपायदारु यूपदारु कुंडलायहिरण्यं कुंडलहिरण्यं भूतायबलिः भूतबलिः शिवायहितं शिवहितम् तस्मैहितं तद्धितम्
पंचमीतत्पुरुषोयथा सिंहात्भयं सिंहभयं चौरात्भयं चौरभयं हयात्पतितः हयपतितः
षष्ठीतत्पुरुषोयथा कृष्णस्यभक्तः कृष्णभक्तः वृक्षस्यफलं वृक्षफलम् वृक्षपुष्पं वृक्षमूलं वृक्षपत्रमित्यादि
सप्तमीतत्पुरुषोयथा अक्षेषुशौंडः अक्षशौंडः अक्षाः द्यूतपाशकाः ग्रामेगतः ग्रामगतः कूपेपतितः कूपपतितः

## अथनञ्समासाः

प्रायोऽन्यैरव्ययार्थैर्नञ्भावार्थबोधकः तत्पुरुषोऽष्ट मोऽयं वैनञ् नाम्नात्र वर्णितः

| | | | |
|---|---|---|---|
| नब्राह्मणः | अब्राह्मणः | नअश्वः | अनश्वः |
| नचटः | अचटः | नअकार। | अनकारः |
| नभेदः | अभेदः | नउत्तरम् | अनुत्तरम् |

अत्रस्वराद्युत्तरपदयोगात्
नकारागमः

## अथबहुव्रीहिः

सप्तधाथबहुव्रीहिःप्रायोऽन्यार्थप्रधानकः द्विपदोबहु स्त्रोऽपिसहपूर्वपदस्तथा संख्योत्तरपदश्चैवसंख्योभ यपदोऽपिच दिगन्तव्यतिहाराभ्यां लक्षणाभ्यां तुसप्तधा ससप्तदशधाज्ञेयः पुनर्भेदैःसलक्षणः स्यात्तरामोय मित्यादौयच्छब्देनान्यबोधनात् द्वित्रेत्यादौतुधेत्तेया परोभयप्रधानता द्विपदस्तुबहुव्रीहिर्विभक्त्यर्थेस माश्रितः द्वितीयादिविभक्तीनां नामभिः षड्विधो मतः षष्ठ्यर्थस्तुबहुव्रीहिस्त्रिधोदाहरणैः क्रमात् तद्गुणोऽतद्गुणोऽपिस्यात् संविज्ञानांतसंयुतः सप्त म्यर्थोबहुव्रीहिः सामानाधिकरण्यभाक् चक्रपा णिप्रयोगादौस्यात्व्यधिकरणोऽपिच।

# उदाहरणानि

तत्र प्रथमं द्विपदो बहुव्रीहिः।

१ द्वितीयार्थे बहुव्रीहिः यथा प्राप्तं धनं यं पुरुषं स प्राप्तधनः प्राप्तम् सुखं यं पुरुषं स· प्राप्तसुखः आरूढवानरो वृक्षः

२ तृतीयार्थे बहु· यथा निर्जितः कामो येन स· निर्जितकामः दत्तं दानं येन स दत्तदानः

३ चतुर्थ्यर्थे बहु· यथा उपनीतं भोजनं यस्मै स· उपनीतभोजनः दत्तो दंडो यस्मै स· दत्तदंडः

४ पंचम्यर्थे बहु· यथा निर्गतं उदकं यस्मात् स· निर्गतोदकः कूपः निर्गता जना यस्मात् ग्रामात् स· निर्गतजनो ग्रामः

५ षष्ठ्यर्थे· बहु· यथा पीतं अम्बरं यस्य स पीताम्बरः विष्णुः बहवो भृत्या यस्य स· बहुभृत्यो धनाढ्यः

६ षष्ठ्यर्थभेदस्तद्गुणसंविज्ञानो बहुव्रीहिः यथा तस्य गुणास्तद्गुणाः तद्गुणाः संविज्ञायंते यत्रेति विग्रहः लंबकर्णमानयेत्यत्र लंबौ कर्णौ यस्य स लंबकर्णः

इति ज्ञाने· लंबकर्णतारूपतद्गुणसंविज्ञानपूर्वकं कर्णविशिष्टस्यैवानयनं भवति

७ अतद्गुणसंविज्ञानो बहुव्रीहिर्यथा दृष्टनाविकमानयेत्यत्र नौरूपतद्गुणविशिष्टस्यानयनासंभवात्तौ

रूपतद्गुणाविज्ञानपूर्वकमेव तस्यानयनं भवति

८ सप्तम्यर्थे व॰ यथा मत्तमुदकंयस्मिन्तेत्रे तत्म मोदकंतेत्रं धृतंमधुयस्मिन्पात्रे तत्धृतमधु पात्रम्

९ वहूपदो॰ यथा सुवदाः वृद्धाः ब्राह्मणाः यस्य सस्ववद वृद्धब्राह्मणः + वहुली रागदृष्टिर्गौर्यस्य सवहुली रागदृष्टिगुः।

१० संख्योत्तरपदोः यथा उपसमीपेदशानामिमेगृह षाः उपदशाः उपविंशाः उपशताः

११ संख्योभयपदोः यथा द्वौ वा त्रयो वा गुख्यायेषु द्वित्रा॰ पंचदशाः पंचषट्

१२ सहपूर्वपदो॰ यथा सहमूलेनउद्धृतः तरुः सम मूलोद्धृतः सहपत्नैः पतितोयः स॰सपत्नपतितः पत्ताः सहायाः

१३ व्यतिहारलक्षणो यथा केशेषुकेशेषुगृहीत्वामव र्ततेयत्युद्धं तत्केशाकेशि मुष्टिभिः मुष्टिभिः मुष्टीमुष्टि दंडैश्चदंडैः दंडादंडि

१४ दिगंतरलक्षणो यथा दक्षिणस्याश्चपूर्वस्याश्च दिशोर्यदन्तरालं सेयंदिक्‌दक्षिणपूर्वा॰ उत्तरपूर्वा दक्षिणपश्चिमा इत्यादि

१५ समानाधिकरणो यथा वहवोवर्णाः यस्मिन्पटेसंति सवहुवर्णः चित्रपटः वहवः पांथायस्मिन्कटेसंति सवहुपांथः कटः

१६ व्याधिकरणो यथा चक्रंपाणौयस्यसचक्रपाणिः

१७ नित्यसमासरूपो व॰यथा कंठेकालोयस्य सकंठे कालःशिवः विलेशेतेयः सविलेशयः सर्पः

उरसि लोमानि यस्य स उरसिलोमा इति बहुव्रीहिः

## अथ कर्म्मधारयः।

कर्म्मधारयसंज्ञस्तु समधा चाष्टमोपिहि विशेषणादि कश्चैव विशेष्यादिपदस्तथा विशेषणद्वयादिश्चोपमा नादिपदोपि च उपमानोत्तरात्मोस्ति संभावनादिकस्त था अवधारणपूर्वोस्ति समपूर्वपदान्वितः मध्यम पदलोपी च कर्म्मधारयकोष्टमः

प्राधान्यं रूपभेदेन द्विविधं कर्म्मधारये क्वचित्पूर्वप दार्थे तु क्वचिदुत्तरके तथा पूरः पुरुषसिंहोयमत्र पू र्वपदार्थके नीलोत्पलमिदं यस्मात् प्राधान्यं चात्र तूत्त रे

### उदाहरणानि यथा

१ विशेषणपूर्वपदो यथा नीलं च तदुत्पलं नीलो त्पलम् श्वेतश्चासौ अश्वश्च श्वेताश्वः नील पवनः नीलघटः

२ विशेष्यपूर्वपदो यथा वैयाकरणश्चासौ खसूची च वैयाकरणखसूची शास्त्रदृष्टः अहोनिर्म्म लं गगनमिति वक्ता

३ विशेषणोभयपदो यथा शीतं च तत् श्वेतं च शीत श्वेतम्

४ उपमानपूर्वपदो यथा कुंद इव श्वेतः कुंदश्वेतः मेघ इव श्यामः मेघश्याम

५ उपमानोत्तरपदो यथा पुरुषोयं व्याघ्र इव पुरुष व्याघ्रः नरोयं सिंह इव नरसिंहः पुरुषोयं वृष

इव पुरुषहृषः

५ संभावनापूर्वपदो यथा गुण इति हृद्धिः गुणहृद्धिः
पुत्र इतियत् ग्रहणं पुत्रग्रहणम्

६ अवधारणापूर्वपदो यथा गुणएवधनं गुणधनं
सज्जनमेववंधुः सज्जनवंधुः

७ मध्यमपदलोपी यथा शाकःप्रियोयस्य पार्थि
वस्यसशाकप्रियःशाकप्रियश्चासौपार्थिवः
शाकपार्थिवः अत्रमध्यगतप्रियपदलोपा
त्संज्ञा इतिकर्म्मधारयः

## अथद्विगुः

संख्यापूर्वपदानांच समासोद्विगुरुच्यते द्विगुःस्यादेक
वद्भावोनेकवद्भावसंज्ञकः विषयस्तद्धितार्थस्यवा
च्योपितद्धितार्थके समाहारेपिक्षेवोत्तरपदपरस्त
था द्वंद्वैकशेष द्विगवः मायःस्युर्द्दिप्रधानकाः

उदाहरणानियथा

एकवद्भावो यथा त्रीणिशृंगानि समाहृतानि इति
त्रिशृंग पंचमूलानिसमाहृतानि इतिपंचमूली
दशमूली शतमूली

अनेकवद्भावो यथा चतस्रोदिशाः चतुर्द्दिशः त्रयोलो
काः त्रिलोकी

समाहारो यथा त्रयाणांसप्तीनां समाहारः त्रिसप्तं
अदंतानांस्त्रीमत्ययांतत्वं पचानांवटानांसमाहा
रः पंचवटी । त्रयाणांलोकानांसमाहारः त्रिलोकी

त्रिफला इतिरूढिः

उत्तरपदो यथा पंचगावः धनंयस्य सपंचगवधनः

तद्धितार्थविषयो यथा द्वयोर्मात्रोरपत्यं द्वैमातुरः षण्णाम् मातॄणामपत्यं षाण्मातुरः पंचनापितानामपत्यं पांचनापितिः

तद्धितार्थवाचो यथा पंचभिः गोभिः क्रीतः पंचगुः

इतिद्विगुः

## अथद्वंद्वः

द्वंद्वःपञ्चविधश्चार्थे ह्येकशेषसमन्वितः समासेद्वंद्वकेतस्यात्प्राधान्यंहिपदद्वये समुच्चयसमाहारौतथैवान्वाचयोमतः इतरेतरयोगश्चाप्येकशेषोस्तिपंचमः लिंगंचान्त्यशब्दस्याद्विवचनादिपंचमे।

१ समुच्चयो॰ यथा चैत्रःपचतिमैत्रश्च अत्रविभक्तिलोपाभावेपिचकारादेकवाक्यतारूपासमासता वाक्यार्थबोधःफलम्

२ समाहारो यथा शंखश्चपटहश्चत योःसमाहारः शंखपटहंवाक्च त्वक्च द्वयोःसमाहारः वाक्त्वचम् पाणिपादम् अत्रांतिमशब्देपकवचनांततानित्यनपुंसकताचसदैव

३ अन्वाचयो॰ यथा भिक्षामट गांचानय॰ अत्रैककार्य्यप्रवृत्तस्यसामान्येनद्वितीयकार्यकरणंभवति

४ इतरेतरयोगो॰ यथा रामश्चकृष्णश्च रामकृष्णौ

रामश्च कृष्णश्च गोविन्दश्च रामकृष्णगोविंदाः
अत्रप्रत्येकपदप्राधान्यात् अनेकद्वयोः द्विवचनंच
द्वंद्वसमासेवहुवचनंचभवति
अन्यशब्दलिंगताच यथा गंगाचप्रयागश्च गंगा
प्रयागौ प्रयागश्च गंगाच प्रयागगंगे
५ एकशेषो यथा माताच पिताच पितरौ दुहिताच
पुत्रश्च पुत्रौ ब्राह्मणीच ब्राह्मणश्च ब्राह्म
णौ इतिद्वंद्वः
समुच्चयेनवाकान्वेद्व द्वंद्वं वाद्वयोश्चवा अंगत्वमाश्रिता
संख्यावाचकानांविकल्पतः

## अथाव्ययीभावः

नामादिश्चाव्ययादिश्चाव्ययीभावोद्विधाभवेत् तत्री
योपिभवन्त्येकः पुनरव्ययसंज्ञया पूर्वोत्तरान्यसंज्ञे
चप्राधान्यंतत्रविद्यते पूर्वस्मिन्चोपकृष्णंतुगंगा
मिविपिनेनिशि प्राधान्यंचोत्तरस्मिंस्तु नगरेद्विसु
रंप्रति उतमगङ्गानिद्वन्द्वेत्वत्रान्यप्रधानकः
नामपूर्वपदो यथा सूपस्यलेशः सूपप्रति घृतस्य
लेशः घृतप्रति शाकस्यमात्रं शाकप्रति फल
स्यमात्रं फलप्रति
अव्ययपूर्वपदो यथा कुंभस्यउपसमीपेवर्त्तते उप
कुंभं कृष्णस्य उपसमीपेवर्त्तते उपकृष्णं क्रम
मनतिक्रम्यवर्त्तते यथाक्रमम्।
पुनरव्ययादिर्यथा ब्राह्मणान् आमंत्रयस्व ब्राह्म
णमामंत्रयस्व यावंत्यमत्राणिसन्ति तावतो

ब्राह्मणानामंत्रयस्वेति या वदमन्त्रम्

## अथ संकीर्णाः समासाः

नित्यो नित्यो लुगन्यो लुक् केवलो घनजश्च मध्यमपदलोपी चोपपदो ह्येकशेषकः

१ नित्यसमासो यथा कंठेकालः अधिहरि इत्यादि बहुव्रीहादौ दर्शितः

प्रायेणाविग्रहो नित्यसमासः

अस्थितावकः कुंभकारश्च

२ अनित्यसमासो यथा राजपुरुषः राज्ञः पुरुषः पदे वाक्यमपि दृश्यते

३ अलुक् समासो यथा नविसारः युधिष्ठिरः खेचरः अत्र इवेन समासो विभक्त्यलोपश्च जीमूतस्य इव जीमूतस्येव

४ केवलसमासो यथा भूतपूर्वः पूर्वंभूतः इति विग्रहः केवलः अलुगेव वागर्थौ इव वागर्थाविव

५ नञ् समासः तत्पुरुषांते दर्शितः

६ मध्यमपदलोपी कर्म्मधारयांते दर्शितः

७ उपपदसमासो यथा सुवंतस्य तिङंतेन सह योगः सउपपदसमासः कर्म्मवाचके पूर्वपदे सति पवनहिधानम्

कुंभं करोतीति कुंभकारः ग्रंथकारः मालाकारः कुंभादि सुवंतपदैः सह करोतीति अदमतिनि धिकारपदसमासः

एकशेषः अयं द्वन्द्वान्ते दर्शितः
लौकिको यथा   पूर्वं भूतः भूतपूर्वः
अलौकिको यथा   पूर्व· अम्· भूत· सु राजन् ङ·स् पुरु
ष· सु इत्यादिरूपः

इति समासाः समाप्ताः

अथास्मिंस्तद्धितप्रकरणे विशेषद्योतनायास्य दशविभागा आके
रे प्रदर्शितास्तेषाञ्च कतिपयेऽनेकभेदसंवलिता यथाऽपत्या
धिकारनाम्नि प्रथमविभागे गोत्रापत्ययुवापत्येत्यावान्तरभेदा
भ्यां त्रिधा सामान्यापत्य· गोत्रापत्य· युवापत्येतिनामभिः प्रत्यया
अभिधीयन्ते नेत्रप्रधानादि विभागा अकारादि वर्णक्रमेण प्रदर्श
यिष्यमाणशब्देषु स्वादिगतैकपादिवर्णैः सूचिता उक्तेयाप्रथित
भागाश्चाधो यथाक्रमकुण्डलितविनाविलोक्यताम् ॥

यदा पौत्रादीनपत्यत्वेन वक्तुमिच्छेत्तर्हि पितामहादीनान्ते गोत्रा
पत्यानि कथ्यन्ते॥ अथ यदा पित्रादयो ज्येष्ठो भ्राता वा जीवति तदा प्र
पितामहादिमपेक्ष्य पौत्रप्रभृतेरपत्यं चतुर्थादिकं युवापत्यमि
ति व्यवह्रियते इति बोध्यम्

| प्रकरणनाम | संकेताक्षराणि | प्रकरणनाम | संकेताक्षराणि |
|---|---|---|---|
| १ अपत्याधिकारः | अप· | ९ ठञधिकारः | ठञ् |
| २ चातुरर्थिकाः | चातु· | १० नञ्स्नञधिकारः | नञ्स्न |
| ३ शैषिकाः | शैषि· | ११ मत्वर्थीयाः | मत्व· |
| ४ प्राग्दीव्यतीयाः | प्राग्दी· | १२ प्राग्दिशीयाः | प्राग्दि |
| ५ ठगधिकारः | ठग· | १३ प्रागिवीयाः | प्रागि |
| ६ प्राग्घितीयाः | प्राग्घि | १४ तद्राजाः | तद्रा· |
| ७ यद्विधिः | यद्वि· | १५ द्विरुक्तप्रक्रिया | द्विरु· |
| ८ आर्हीयप्रकरणम् | आर्ही | | |

अंगना। नः। म॰। अंगानि अस्याः संतीति। कल्याण्यंगान्यस्याः
आंगिरसः। अण्। अप॰। अंगिरसः अपत्यानि। बहुत्वे। आंगिर
सा अपि।
अंगुलीयम्। छः। शै। अंगुल्यांभवं। शोभनेवा।
अंगुलीयकम्। कः। शै॰ स्वार्थे अंगुलीयमेवेतिविग्रहः
आग्नेयम्। ढक्। अप॰ अग्नेरपत्यादि
आग्रभोजनिकः। ठक्। ठ॰। अग्रेभोजनंनियतंदीयतेयस्मैसः
अग्रिमम्। डिमच्। शै॰। अग्रेभवम् साधुवा
अग्र्यः यत्। प्राग्धि। अग्रेसाधुः।
अजथ्या। थ्यन्। छ॰। अजाभ्योहिता अजथ्या। अजथ्या अजा
समूहः।
अणीष्ठः। इष्ठन्। प्रागि। सर्वेषामतिशयेन अणुः इति।
अणिमा। इमनिच्। तज्जस्य। अणोर्भावइति।
अणुकः। कन्। तद्धा। अणुइवप्रकृतिः
अणुकम्। तद्धाज॰। अणुरेव
अतः। तस्। तसिल्। अव्य॰ प्राग्दी॰। अस्मादिति।
अंततः तसिल्। तद्धा॰। अंतेइति।
अतितराम्। तरप्। प्रागि अतिशयेन अतिक्रमणम्
अतीसारकी। इनिः। म॰। अतीसारमस्यास्तीति।
अत्यंतीनः। खः। म॰। अत्यंतंगामी अत्यंतीनः।
अत्र। त्रल्। प्राग्दि॰। अव्यय। अस्मिन्निति
अद्य। द्य। प्राग्दि॰। अव्य। अस्मिन्नहनि इति।
अद्यतनम्। ट्यु। ट्युल्। शै॰। अद्यजातमित्यादि।
अधः। असिः। प्रागिवी। अव्य। अधरस्यांदिशि। अधरस्याः
दिशः। अधरावादिक्।
अधरेण। एनप्। प्रागि॰। अधरस्मिन्निति।

अधरेद्युः। एद्युस्। प्राग्। अधरस्मिन्नहनि।
अधस्तात्। अस्तातिः। प्राग्वि०। अधरस्यां वा इति।
अधार्म्मिकः। ठक्। ठ। अधर्ममाचरतीति।
अधित्यका। त्यकन्। म०। पर्वतस्य आरूढंस्थलमिति।
अधीती। इनिः। म०। अधीतमनेनेति।
अधुना। अधुना। प्राग्दी०। अव्य०। अस्मिन् काले इति।
अध्वनीनः। खः। म०। अध्वानम्। अलंगच्छतीति।
अध्वन्यः। यत्। म०। अध्वानम् अलंगच्छतीति।
अनेकधा। धा। अनेकप्रकारः।
अन्यतरेद्युः। एद्युस्। प्राग्दि०। अव्य०। अन्यतरस्मिन् अहनि इति।
अन्यथा। थाल्। प्राग्दि०। अव्य०। अन्यप्रकारेणेति।
अन्यदा। दा। प्राग्दि०। अव्य०। अन्यस्मिन् काले इति।
अन्येद्युः। एद्युस्। प्राग्दि०। अव्य०। अन्यस्मिन्नहनि इति।
अन्योन्यस्य। अन्यस्य द्वित्वम्। पूर्वपदस्य सुप्स्वरादेशः द्विरु-
कर्मव्यतिहारेणान्यः अन्यस्य
अन्योन्यंनमनं।
अन्योन्येनकृतम्।
अन्योन्यस्मैदत्तम्। द्विरुक्तम्
अन्योन्याश्रयः।
अपराह्णिकः। वुञ्। शै०। अपराह्णेजातः।
अपराह्णेतनम्। ट्यु। ट्युल्। शै०। अपराह्णकालेजातं।
अपरेद्युः। एद्युस्। अपरस्मिन्नहनिइति।
अभितः। तस्। प्राग्दि०। अव्य० चतुर्दिग्भ्यइति।
अभिरूपतमा। तमप्। सर्वेषामतिशायेन अभिरूपेति।
अमात्यः। त्यप्। शै०। अमांतिकसहाययोरव्ययं। निकटेसहा

येबावर्ततेइति।
अमुतः। तसिल्। प्राग्दि॰। अव्य॰। अमुष्मादिति
अमुत्र। त्रल्। प्राग्दी॰। अव्य॰। अमुष्मिन् इति
अयाथातथ्यम्। ष्यञ्। नञ्समास॰ अयथातथाभावइति।
अर्घ्यः। यत्। आर्हीं॰ अर्घमर्हतीति।
अर्घ्यम्। यत्। तद्धि॰। अर्घार्थमुदकमित्यादि।
अर्थी। इनिः। म॰। अर्थोस्यास्तीति।
अर्थ्यं। यत्। प्राग्घि। अर्थादनपेतम्।
आर्द्धिकः। ठिकन्। आर्हीं॰। अर्द्धेनक्रीतः। इति
आर्द्धिकी। ठिकन्। आर्हीं॰। अर्द्धक्रीतायासा।
अर्णवः। वः। मत्व॰। अर्णांसि विद्यंते अस्य इति
अल्पशः शस्। तद्धि॰। अल्पानि इति॰
अल्पीयान्। ईयसुन्। तद्धि॰। अयमेषामतिशयेन अल्पइति
अवः। असिः। प्रागिवी॰। अव्य॰। अवरस्यादिशि। अवर स्यादिशः। अवरावादिक्
अवरतः। तसिल्। प्रागिवी॰ अव्य॰। अवरस्यादितम्
अवरस्तात्। अस्तातिः। प्रागिवी॰। अव्य॰। अवरस्यांदिशि। अवरस्यादिशः। अवरावादिक् इति
अवस्तात्। अस्तातिः प्रागिवी॰। अव्य॰। अवरस्यांदिशि। अवरस्यादिशः अवरावादिक् इति
अवंती॰। लोपः अप॰ अवंतीदेशस्यनगर्याः वाराज्ञी
अवाच्यम्। यत्। शै॰। अवाच्यांदिशिभवं। अपशब्दवाचकस्तत्कृदंतप्रयोगः।
अवारपारीणः। खः शै॰। अवारपारे जातादिः। खः। मः। अवारपारेगामी इति।

अवारपारवारीणः । खः शै॰ । अवारपारवारेजातादिः ।
अवारीणः । खः । शै॰ अवारेजातादिः । खः । म॰ । अवारेगामीइति
अविथ्या । यत् । ऊ॰ प॰ कार्यादिता ।
अश्ममयम् । मयट् । प्रा॰ । अश्मनः अवयवरूपंविकाररूपंवा
अश्वीयम् । छः । चा॰ । अश्वानांसमूहः ।
अष्टमः । डट् । मडागमः । म॰ । अष्टानाम्पूरकः ।
अंसलः । लच् । म॰ । अंसोस्यास्तीति ।
अस्मदीयः । छः । शै॰ । आवयोः अस्माकंवा । अयम् ।

आकरिकः । ठक् । ठ॰ । आकरेनियुक्तः ।
आकर्षकः । वुन् । म॰ । आकर्षेकुशलः । रेफाभावे । आकषकोपि
आगस्त्यः । यञ् । अप । अगस्त्यस्य गोत्रापत्यं आगस्त्यः । तस्य
बहुत्वेयञोलुकि आगस्त्य देशेच अगस्तयः ।
आंगः । अण् । अप॰ । अंगस्यगोत्रापत्यं । ततः फिञ्युवापत्येत
स्यलुक् । आंगः पिताप्रुत्रश्च ।
आंगी । अण् । अप॰ । अंगदेशानांराज्ञी ।
आग्निमारुतम् । अण् । चा॰ । अग्निमरुतौदेवतेअस्य ।
आग्नेयाः । ढक् । चा॰ । अग्निर्देवतास्येति । तस्येदमितिवा ।
आग्रहायणिकः । ठक् । चा॰ । आग्रहायणीपौर्णमास्यस्य
स्मिन्मासेइत्यादि ।
आग्रहायणीकम् । ठञ् । शै॰ । आग्रहायण्यांदेयमृणम् ।
आग्रहायणी । अण् । चा॰ । अग्रेहायनमस्यांसा ।
आचमनीयम् । छः । प्रा॰ । आचमनार्थमुदकादि ।
आचमनीयकम् । छः । प्रा॰ । आचमनार्थमुदकम् ।
आचार्यकम् । वुञ् । आचार्यस्यभावइति ।

आढ्यकुलीनः। खः। अप। आढ्यकुलेजातः अथवा आढ्य
कुलस्यापत्यम् पुमान्।
आढ्यचरः। चरट्। भूतपूर्वे। आढ्योभूतपूर्वइति।
आतिथेयम्। ढञ्। साधु। अतिथयेसाधुइति।
आतिथ्यम्। ण्यः। तद्रा। अतिथयेदेयं दीयतेवा
आत्मनीनम्। खः। तद्धि। आत्मनेहितमिति।
आत्रेयः। ढक्। अप। अत्रेरपत्यमिति
आथर्वणः। ण्यः। शै। अथर्वणांधर्मआम्नायोवा।
आथर्वणिकः। ठक्। चा। अथर्वणमधीतेवेत्तिवा।
आदितः। तसिल्। तद्रा। आदौइति। अव्य
आदित्यः। ण्यः। अप। अदितेरपत्यादि।
आदिमम्। डिमच्। भ। आदौभवः इति
आधिदैविकम्। ठञ्। शै। अधिदेवेभवम् इत्यादि
आधिभौतिकम्। ठञ्। शै। अधिभूतंवर्त्तते अधिभूते
भवम् इत्यादि।
आध्यात्मिकम्। ठञ्। शै। अध्यात्मनिभवमित्यादि।
आध्वर्यवम्। अञ्। शै। अध्वर्योः इदम्।
आनुकूलिकः। ठक्। ठ। अनुकूलंवर्त्तते।
आनुलोमिकः। ठक्।ठ। अनुलोमंवर्त्तते।
आपणीकः। ठक्। ठ। आपणस्यधर्मः
आपत्कालिकः। निठ। शै। आपत्कालेजातादि।
आपत्कालिकी। ठञ्। शै। आपत्कालेजातादि।
आपराह्णिकम्। ठञ्। शै। अपराह्णेभवम्।
आपूपिकः। ठक्। शै। अपूपाः भक्तिः भागोयस्यसः।
आभिकः। ठक्। ठ। अभियावनतीतिकहीइति।

आमलकम्। मयट् भा॰ नस्यलुक्। आमलक्याः विकाररूपम् फलम्।
आम्रमयम्।मयट्॰ भा॰ आम्राणां अवयवरूपं विकाररूपं वा।
आमितीयम्। छ। भा॰। आमितायेहितम्।
आयुधिकः। ठन्। ठ॰। आयुधेन आयुधेर्वा जीवति।
आयुधीयः। छः। ठ॰। आयुधेजीवति आयुधीयः।
आरण्यकः। वुञ्। शै॰। अरण्येभवः। पन्थाः अध्यायः न्यायः। विहारः मनुष्यः हस्तीचेते। गोमये आरण्यकाः पक्षे आरण्याः वा।
आर्चः। णः। म॰। अर्चा अस्यास्तीति।
आर्ची। णः। म॰। अर्चा अस्याः अस्ति इति।
आर्द्धद्रौणिकः। ठञ्। आर्ही। अर्द्धद्रोणेन क्रीतः।
आर्द्धद्रौणिकम्। ठञ्। आर्ही॰। अर्द्धद्रोणेन क्रीतम्।
आर्यकल्पः। कल्पप्। ईषदूनआर्य्य इति।
आवंत्यः। ञ्यङ्। अवंत्याः राजा। अवंते अपत्यंवा।
आशिषिकः। ठञ्॰। आशिषा जीवति।
आशौचम्। अण्। शै। अशुचेरपगतं। पक्षे। अशौचं। नशौचं अशौचं वा।
आश्वः। अञ्। चा। अश्वस्य भावः इति अश्वैरुह्यते इति वा। आण्॰ शै। रथः।
आश्वम्। अण्। चा॰। अश्वानां समूहः अश्वस्य भाव इति वा।
आश्वपतः। अण्। अप। अश्वपतेरपत्य इति।
आश्वपतम्। अश्वपतेरपत्यादि॰ अप॰ अण्।
आश्वः । अण्॰ शै॰। अश्वैरुह्यते। रथः
आश्विकः। ठक्। ठ। अश्वेन गच्छति चरति वा कन्। तद्धा॰। अश्व इव भाति कृतिः आश्विकः

आश्विकम्। अश्वेनगमनम्। ठक्‌। ठस॰

आश्मः। अण्। मा॰ दीम। अश्मनःविकारः।

आश्मनम्। अन्। मा॰। अश्मनः विकारमयम्।

आश्मरः। रः। चा॰। अश्मना। अश्मभिर्वानिर्वृत्तः

आषाढः। अण्। चा॰। आषाढी पौर्णमास्यस्य। स्मिन् मासेति

आष्टमः। ञः। आगिवी। अष्टमोभागः इति

आष्टाकपालः। अण्। चा॰। अष्टस्वकपालेषुसंस्कृतः पुरोडाशः

आसिकः। ठक्। ठ॰। असिः प्रहरणमस्येति।

आस्माकः। अण्। शै॰। आवयोः। अस्माकंवा।

आस्तिकः। ठक्। अस्तिपरलोकं मतीयस्येति।

आस्माकीनः। खञ्। शै॰। आवयोः अस्माकंवा।

आस्यमात्रम्। मात्रच्। आस्यंप्रमाणमस्येति जलम्।

आह्निकम्। ठञ्। ठञ्॰। अह्नानिर्वृत्तमाह्निकम्।

आतिकः। ठक्। ठ॰। अत्तैर्दीव्यतिजयतिवा।

आतिकम्। ठक्। ठ॰। अतैर्जितम् इत्यादि।

आतद्यूतिकम्। ठक्। ठ॰। अतद्यूतेननिर्वृत्तंवैरं पांडवानां यथा।

इतः। तसिल्। मादि॰। अव्य॰। अस्मादिति।

इत्थम्। थमु। मादि॰। अव्य। अनेनप्रकारेणेति।

इतरेद्युः। द्युस्। इतरस्मिन्नहनि।

इदानीम्। दानीम्। मादि॰। अव्य॰। अस्मिन्कालेइति।

इंद्रकल्पः। कल्पप्। इषदिन्द्रानसमाप्यते इषदूनः इंद्रः इतिवा।

इयान्। मतुप्। म॰। इयत्प्रमाणमस्येति।

इष्टी। इनिः। म॰। इष्टमनेनेति।

आमलकम्। मयट्‌मा॰ नस्यलुक्। आमलक्या विकारङ्फलम्
आम्रमयम्।मयट्॰ मा॰ आम्राणां अवयवरूपंविकाररूपंवा।
आमितीयम्। छ। मा॰। आमितायैहितम्।
आयुधिकः। ठन्। ठ॰। आयुधेनआयुधैर्वाजीवति।
आयुधीयः। छः। ठ॰। आयुधेजीवति आयुधीयः।
आरण्यकः। वुञ्। शे॰। अरण्येभवः। पन्थाः अध्यायः।न्यायः।विहारः मनुष्यः हस्तीचेन्ने। गोमये आरण्यकाः पक्षे आरण्याः वा।
आर्चः। णः। म॰। अर्चाअस्यास्तीति।
आर्ची। णः। म॰। अर्चाअस्याः अस्ति इति।
आर्द्धद्रोणिकः। ठञ्। आर्द्दी। अर्द्धद्रोणेनक्रीतः।
आर्द्धद्रोणीकम्। ठञ्। आर्द्दी॰। अर्द्धद्रोणेनक्रीतम्।
आर्यकल्पः। कल्पप्। ईषदूनआर्य्य इति।
आवंत्यः। ञ्यङ्। अवंत्याःराजा। अवंते अपत्यंवा।
आशिषिकः। ठञ्॰। आशि षाजीवति।
आशौचम्। अण्। शै। अशुचेरपगतं।पक्षे। अशौचं। नशौचं अशौचंवा।
आश्वः। अञ्।ता। अश्वस्यभावःइति अश्वैरुह्यतेइतिवा। आण्॰ शै। रथः।
आश्वम्। अण्। ता॰। अश्वानांसमूहः अश्वस्यभावइतिवा।
आश्वपतः। अण्। अप। अश्वपतेरपत्यइति।
आश्वपतम्। अश्वपतेरपत्यादि॰ अप॰ अण्।
आश्वः। अण्॰ शै॰। अश्वैरुह्यते।रथः
आश्विकः। ठक्। ठ। अश्वेनगच्छति चरतिवा करु। नद्याः। अश्वइवभाति हृतिः आश्विकः

आश्विकम्। अश्वेनगमनम्। ठक्‌। ठम।
आश्मः। अण्। प्रा॰ दीव्य। अश्मनः विकारः।
आश्मनम्। अञ्। प्रा॰। अश्मनः विकारमयम्।
आश्मरः। रः। चा॰। अश्मना। अश्मभिर्वा निर्वृत्तः
आषाढः। अण्। चा॰। आषाढी पौर्णमास्यस्य स्मिन् मासेति
आष्टमः। ञः। प्रागिवी। अष्टमोभागः इति
आष्टाकपालः। अण्। चा॰। अष्टसुकपालेषु संस्कृतः पुरोडाशः
आसिकः। ठक्। ठ॰। असिः प्रहरणमस्येति।
आस्माकः। अण्। शै॰। आवयोः। अस्माकं वा।
आस्तिकः। ठक्। अस्ति परलोकं मतीयस्येति।
आस्माकीनः। खञ्। शै॰। आवयोः अस्माकं वा।
आस्यमात्रम्। मात्रच्। आस्यं प्रमाणमस्येति जलम्।
आह्निकम्। ठञ्। ठञ्॰। अह्ना निर्वृत्तमाह्निकम्।
आक्षिकः। ठक्। ठ॰। अक्षैर्दीव्यति जयति वा।
आक्षिकम्। ठक्। ठ॰। अक्षैर्जितम् इत्यादि।
आक्षद्यूतिकम्। ठक्। ठ॰। अक्षद्यूतेन निर्वृत्तं वैरं पांडवानां
यथा।
इतः। तसिल्। प्राग्दि॰। अव्य॰। अस्मादिति।
इत्थम्। थमु॰। प्राग्दि॰। अव्य। अनेन प्रकारेणेति।
इतरेद्युः। द्युस्। इतरस्मिन्नहनि।
इदानीम्। दानीम्। प्राग्दि॰। अव्य॰। अस्मिन् काले इति।
इंद्रकल्पः। कल्पप्। इषदिन्द्रो नसमाप्याते इषदूनः इं
द्रः इति वा।
इयान्। मतुप्। म॰। इयत्प्रमाणमस्येति।
इष्टी। इनिः। म॰। इष्टमनेनेति।

इह। ह। प्राग्दि। अव्य:। अस्मिन् देशे। लोके। काले वेतिवर्त्तते
इहत्यः। त्यप्·। शै·। इहभवः। जातादिः।
उख्यम्। यत्। चा·। उखापात्रविशेषः तस्यां संस्कृतम्।
उच्चकैः। अकच्। प्रागिवी। उच्चैःएव इति।
उडुलोमाः। अः। उडुलोम्नः अपत्यानि
उत्कः। कन्। म·। उत्कंठितोयं। उत्कः
उत्कटम्। कटच्। तत्र। उत ऊर्द्धंप्राप्नोतीति।
उत्कंठितः। इतच्। म·। उत्कण्ठासंजाता अस्य।
उत्का। कन्। म·। उत्कंठितास्त्री। नायिका।
उत्तरतः। तसिल्। प्रागिवी·। अव्य। उत्तरस्मादिति।
उत्तरपदिकः। ठन्·। उत्तरपदे वर्त्तते इति।
उत्तरतोवसति। अतसुच्। प्राग्दि·। अव्य·। उत्तरस्यांदिशि
उत्तरस्मिन् देशेवा इति।
उत्तरागतः। आतिः। प्राग्दी·। अव्य·। उत्तरस्माद्देशा दागतः
उत्तरेद्युः पद्युस् उत्तरस्मिन्नहनि इति
उत्साही। इनिः। म·। उत्साहोस्यास्तीति।
उदीच्यम्। यत्। उदीच्यांभवम्।
उरुगंधिः। इत्। उरुगंधोयस्येति।
उपत्यका। इतच्। म·। पर्वतस्य समीपे आरूढंस्थलम् इति
उपरिष्टाद्वसति। रिष्टातिः। प्राग्दी·। अव्य· ऊर्द्धं वसति।
उभयेद्युः। एद्युस्। उभयस्मिन्। उभययोर्वा दिनयोः इति
उभयद्युः। एद्युस्। प्राग्दि·। अव्ययं। उभयोरह्नोः।
उरसिलः। इलच्। म·। उरः अस्यास्तीति।
उरस्यः। यत्। शै·। उरसिभवः। उरसा पकादिक्। हारादयः
उरस्वान्। मतुप्। म·। उरोयस्तीति उरस्वान्।
उषस्यम्। यत्·। चा·। उषःप्रातःकालोदेवतास्येति। तस्येदमि
तिवा।

उष्णालुः। आलुच्। म०। उष्णं न सहते इति।
ऊरुदघ्नम्। दघ्नच्। म०। ऊरुप्रमाणमस्येति। जलम्।
ऊरुद्वयसम्। द्वयसच्। म०। ऊरुप्रमाणमस्येति।
ऊरुमात्रम्। मात्रच्। म०। ऊरुप्रमाणमस्येति।
ऊर्णायुः। युस्। ऊर्णायस्यास्तीति।
ऊर्ध्वंवसति। रिल्। प्राग्दी अव्यय० उच्चैर्वसति।
ऋतव्यम्। यत्। ऋसंबंधीयत् ऋतवे हितम्।
ऋष्यकम्। कः। चा०। ऋष्येण निर्वृत्तम्।
एकः। आकिन्। प्राग्वि०। आकिनो लुक्। न सहायो स्येति।
एककः। कन्। प्रै०। असहायः एकाकी
एकदा। दा। प्राग्दि०। अव्य०। एकस्मिन् काले इति।
एकधा। धा। प्राग्वि०। अव्य०। एकप्रकारमिति।
एकध्यम्। ध्यमुञ्। प्राग्वि०। एकधा वा धुं क्ते इति।
एकधुरीणः। खः। प्राग्हि०। एकधुरं वहतीति।
एकविंशः। डट्। म०। एकविंशतेः पूरकः एकविंशः।
एकविंशतितमः। तमट्। म०। एकविंशतेः पूरणः इति।
एकशततमः। तमट्। म०। एकाधिकशतस्य पूरणः इति।
एकषष्टः। डट्। म०। एकषष्टेः पूरकः इति।
एकषष्टितमः। तमट्। म०। एकषष्टेः पूरणः इति।
एकाकी। आकिन्। प्राग्वि०। न सहायोस्येति।
एतर्हि। र्हिल्। प्राग्दि०। अव्य०। एतस्मिन् काले।
एतावान्। मतुप्। म। एतावत्प्रमाणमस्येति।
ऐकध्यम्। ध्यमुञ्‌०प्राग्वि०एकस्यभावः इति एकधावाणिञ्‌कृत्।
ऐणम्। अण्। प्रा०। एणस्य हरिणस्य विकारः रूपम्।
ऐणेयम्। ढञ्। प्रा०। एण्याः विकाररूपं ढञ् एण्या अपत्यमवा

ऐतिह्यम्। ञ्यः। तद्धि। इतिह इति।
ऐतिहासिकः। ठक्। चा। इतिहासमधीते वेद वा।
ऐंद्रम्। अण्। चा। इंद्रोदेवता अस्य इति।
ऐषमस्तनम्। ट्युल्। ट्युट्। शैषिकौ। ऐषमः इत्यव्ययं तत्रजातादि।
ऐषमः। समरणस्। प्रागि। अव्ययं अस्मिन् संवत्सरे जातादि
ऐषमस्त्यम्। त्यप्। शै। ऐषमः इत्यव्ययं तत्रजातादि।
ऐहलौकिकम्। ठञ्। शै। इह लोके भवम्।
औडुपिकः। ठक्। ठ। उडुपेन तरति
औडुलोमिः। इञ्। अप। उडुलोम्नोऽपत्यम्। बहुषुकाः उडुलोमाः
औत्तराहः। आहञ्। शै। उत्तरस्यां भवः जातादिर्वा।
औत्सः। अञ्। अप। उत्सस्यापत्यादि।
औदश्वित्कः। ठक्। चा। उदकं श्वयति वर्द्धते इति उदश्वित्। उदश्वितः सः।
औडुंबरः। अण्। चा। उडुंबराः संत्यस्मिन्।
औपगवः। अण्। अप। उपगोरपत्यम्। उपगोः गोत्रापत्यं वा उपगोरयं वा।
औपगवी। अण्। अप। उपगोरपत्यं स्त्री।
औपनिषदः। अण्। शै। उपनिषद्भिः गम्यते इति।
औरसः। अण्। प्राग्दि। उरसा निर्मितः इति।
औरस्यः। यत्। प्राग्दि। उरसा निर्मितः पुत्रः औरस्यः। उरसः सकाशाद्भवतीति वा।
और्णम्। अञ्। प्राग्दी। ऊर्णायाः विकाररूपम्।
और्णकम्। वुञ्। प्रा। ऊर्णायाः विकाररूपम्। सूत्रम्।
औलपयः। ञ्यः। तद्धि। औलपीयो। बहुत्वे औलपयः।
औलूखलः। अण्। शै। उलूखले संनाः।

औषिकः। ठक्। चा॰। उषाचरति।
औष्ट्रम्। अञ्। उष्ट्रस्यभाव इति।
औष्ट्रासम्। अण्। चा॰। उष्ट्रासाहसम्। साम।
औष्ट्रम्। अण्॰। चा॰। उष्ट्रसाहस्रमसाम। टिलोपोऽत्र।

कठाः। णीनिः। शै॰। तस्यल्लुक्। कंठेनप्रोक्तमधीयते।
कंठ्यः। यत्। कंठेभवः इति।
कंठ्यम्। यत्। त्र्। कंठेहितम् इति।
कच्छुरः। रः। म॰। कच्छूरस्यास्तीति विग्रहः कच्छू इत्यस्य ह्रस्वत्वम्
कतरः। डतरच्। प्राग्॰। अनयोः कः।
कतमः।
कति। डति। म॰। कियत्प्रमाणंयस्येति। कति
कतिथः। डट्। म॰। कतिसंख्यकानांपूरण इति थुगागमः।
कतिधा। धा॰। प्राग्दी॰। कतिप्रकारः इति।
कतिपयथः। डट्। म॰। कतिपयसंख्यकानांपूरणइति।
कथम्। थमु॰। प्राग्दि॰। अव्य॰। केनप्रकारेणेति।
कदा। दा। प्राग्दि॰। अव्य॰। कस्मिन्कालेइति।
कनिष्ठः। इष्ठन्। प्राग्॰। सर्वेषामतिशयेन अल्पः इति
कनीयान्। ईयसुन्। प्राग्॰। अयमनयोरतिशयेन कनिष्ठइति
कर्णिका। कन्। शै॰। कर्णेभवा। भूषणम्।
कर्ण्यम्। यत्। प्राग्हि॰। कर्मणेहितम्।
कर्मण्यः। यत्। प्राग्हि॰। कर्मणिसाधुः।
कवर्गीयम्। छः। शै॰। कवर्गेभवम्।
कर्हि। र्हिल्। प्राग्दि॰। अव्य॰। कस्मिन्काले। कदाइति।
काकम्। अण्। चा॰। काकानांसमूहः।

काच्छः। अण्। शै॰। कच्छदेशेभवः। काच्छः।
काठिन्यम्। ष्यञ्। तत्स॰। काठिनस्यभावः।
काणेयः। ढक्। अप॰। काणस्यापत्यम्।
काणेरः। ढ्रक्। अप॰। काणस्यापत्यम्।
काण्वाः। अण्। शै॰। कण्वस्यछात्राः।
कात्थीयाः। छः। अप॰। कात्यायनस्यछात्राः अत्रफकः लुक्।
कात्यायनीयाः। छः। अप। कात्यायनस्य छात्राः अत्रफकः लुक्।
कात्रेयकः। ढकञ्। शै॰। कुत्सिताः त्रयः कत्रयः। तत्रजातादिः।
काथिकः। ठक्। साग्वि। कथायांसाधुः। इति।
काद्रवेयाः। ढक्। अप॰। कद्र्वाः अपत्यानि।
कानीनः। अण्। अप। कन्यायाः अपत्यं। कर्णो। व्यासश्च।
कापेयम्। ढक्। कपेः भावः। इति।
कापोतम्। अञ्। चा॰। कपोतानांसमूहः।
कापित्थम्। अण्। सा॰। कपित्थस्यविकारःरूप मिति।
कायम्। अण्। चा॰। कोब्रह्मादेवतास्येति।
कारीरम्। अञ्। साग्दी। करीरस्यावयवःविकाररूपंवा।
कारूषी। अण्। अप॰। करूषाणांदेशा नांराज्ञी। दंतवक्त्रमहिषी
कार्तिकः। अण्। चा॰। कार्त्तिकीपौर्णमासीयस्मिन्मासेसः।
कार्पासम्। अण्। साग्दी॰। कार्पासस्यविकारः तत्आच्छादनम्।
कार्त्तिकी। अण्। चा॰। कृत्तिकायुक्तापौर्णमासी।
कार्त्तिकिकः। ठक्। चा॰। कार्त्तिकीपौर्णमासीयस्मिन्मासेसः।
कार्द्दमिकः। ठक्। चा॰। कर्द्दमेनरक्तःपटः।
कार्मार्यायणिः। फिञ्। अप॰। कार्मार्यस्यापत्यम्। कर्मकारस्याप त्यंकार्मार्यः
कार्मुकम्। उकञ्। ठञ्॰। कर्मणि प्रभवतीति।
कार्ष्णिः। इञ्। अप॰। कृष्णस्यापत्यमिति।

कालशेयम्। ढञ्। शै॰। कलशिघटः। तत्रभवं। पयः।
कालायाः। अण्। शै॰। कलापिना प्रोक्तम्अधीयते।
कालिंगः। अण्। कलिंगदेशस्यराजा। कलिंगस्यापत्यंवा।
कालेयम्। ढक्। अप॰। कलेरपत्यादि।
कावचिकम्। ठञ्। चा॰। कवचिनांसमूहः।
काव्यम्। ष्यञ्। तन्त्र। कवेर्भावः कर्मवाकाव्यम्।
काशिका। ञिठ्। शै॰। काशिः देशविशेषः तत्रजातादि।
काशिकी। ठञ्। शै॰। काशिः देशविशेषः तत्रजातादि।
काशिलः। इल॰ चा॰। काशेननिर्वृत्तम्।
काषायम्। अण्॰ चा॰। कषायेणरक्तंवस्त्रम्।
कांस्यम्। कंसापहितं। कंसीयंकः तस्यविकारः यञ्। तक कंस्य
कियंतः। मतुप्। म। कियत्प्रमाणंयस्येति।
कियान्। मतुप्। म। कियत्प्रमाणमस्येतिकियान्।
किरातार्जुनीयम्। छः। शै॰। किरातार्जुनमधिकृत्यकृतम्।
कुंचकीयम्। छः। चा॰। कुंचकाभ्योअहरभवम्।
कुंजरः। रः। म॰। कुंजः हृस्वदेशः दंतोवा। तदस्यास्तीति।
कुटीरः। रक्। प्रागिवी॰। अल्पाकुटी।
कुतः। तस्। प्राग्दि॰। अव्य॰। कस्मादिति।
कुत्र। त्रल्॰। प्राग्दि॰। अव्य॰ कस्मिन्निति।
कुत्साः। अण्। अप॰। कुत्सस्यापत्यानि॰। अणःलोपात्कौत्साः
कुमारतरः। तरप्। अयमनयोरतिशयेनकुमारः इति।
कुमुद्वान्। मतुप्। चा॰। कुमुदानिसंत्यस्मिन्।
कुलीनः। खः। अप॰। कुलस्यापत्यं।
कुल्यः। यत्॰ अप॰। कुलेभवः। कुलस्यापत्यंवा।

कुसीदिकः। कुसीदायप्रयच्छतीति वृद्धिजीवी। व्याजजीया इतिभाषा

कुसुमितः। इतच्। कुसुमानिसंजातानि अस्येति।

कूर्चिका। ठन्। म॰। कूर्चमस्त्यस्याः साकूर्चिका॰ कूर्च श्मश्रुन्त

ए शुक्लेवा दाढी इति।

कुह। ह। प्राग्दि॰। अव्यय कस्मिन्काले इति किमः कुआदेशः

कृत्रिमं। मप्। ठ॰। उत्पन्नेर्थे करणेन निर्वृत्तम्।

कृशतमः। तमप्। प्रागि॰। अयमेषामतिशयेन कृशः

कृशतरः। तरप्। अयमनयोरतिशयेन कृश इति।

कृषीवलः। वलच्। म॰। कृषिः क्षेत्रादिकर्मास्यास्तीति।

कृष्णः। मतुप्। म॰। कृष्णोगुणोस्यास्ति इति।

कृष्णीकृतः। च्विः। तद्रा। अकृष्णः कृष्णः संपद्यते इति।

कृष्णीयान्। ईयसुन्। अयमेषामतिशयेन कृष्ण इति।

केकयी। अण॰ अप॰। केकयस्यराज्ञः अपत्यंयास्त्रीसाकेकयी।

केशचणः। चणप्। केशेनवित्त इति।

केशवः। वः। म॰। केशोस्यास्तीति।

केशवान्। मतुप्। म॰ प्रशस्ताः केशाः अस्यसन्तीति।

केशिकः। ठन्। म॰। केश केशोभग इतीयते। केशवती स्त्री॰

कैकेयी। अण्। अप॰। केकयदेशविशेषाणां राज्ञी।

कैदारकम्। वुञ्। चा॰ केदाराणांसमूहः।

कैदारम्। अण्॰। चा॰ केदाराणांसमूहः।

कैदारिकम्। ठञ्। चा॰ केदाराणांसमूहः।

कैदार्यम्। यञ्। चा॰ केदाराणांसमूहः।

कैशिकम्। ठक्। चा॰ केशानांसमूहः।

कैशीयम्। छः। चा॰ केशानांसमूहः।

कैश्यम्। यः। चा। केशानांसमूहः।
कौंजायनः। च्फञ्। अप। कुंजस्यगोत्रापत्यम्।
कौंजायिन्यः। ञ्यः। अप। कौंजायनएव कौंजायन्यः।
कौंतिकः। ठक्। ठ। कुंतः प्रहरणमस्येति।
कौंभकारिः। इञ्। अप। कुंभकारस्यापत्यम्।
कौंभकार्यः। ण्यः। अप। कुंभकारस्यापत्यम्।
कौमारः। अञ्। चा। अपूर्वपतिंकुमारीं पतिरुपपन्नःइति
कौमारःपतिः विवाहितः यद्वा अपूर्वपतिः कुमा
रीपतिमुपपन्ना कौमारीभार्या।
कौमारम्। अञ्। कुमारस्यभावः।
कौमारी। अञ्। चा। कुमारीपतिनोपपन्ना।
कौमुदिकः। ठक्। चा। कुमुदानिसंत्यस्मिन्।
कौरवः। अण्। अप। बहुत्वेलुकि कुरवः।
कौरवकः। वुञ्। शै। कुरुषुदेशविशेषेषुजातादिः।
कौरव्यः। ण्यः। अप। कुरोरपत्यं। कुरूणांराजावा।
कौलः। शै। कुलेजातादिः। अण्।
कौलटिनेयः। ढक्। अप। कुलटाया अपत्यम् भिक्षुकीसती कुलटा
कौलटेयः। ढक्। अप। कुलटाया अपत्यम् भिक्षुकीसती कुलटा
कौलटेरः। ढ्रक्। अप। व्यभिचारिण्याःकुलटाया अपत्यम्
कौलत्थम्। अण्। ठ। कुलत्थेनसंस्कृतम्।
कौलेयः। ढक्। कुलेभवः।
कौलेयकः। ढकञ्। शै। कुलेजातादिः श्वैव। अन्यः कौलः
कौशलायनिः। फिञ्। अप। कुशलस्यापत्यम्।
कौशांबी। अण्। चा। कुशांबेननिर्वृत्ता
कौशेयम्। ढञ्। कोशेभवं। शै। जातम्।

कौसल्यः। ञ्यङ्। अप। कोसलदेशानां राजा। कोसलस्यापत्यं वा
कौसुंभः। अण्। कुसुंभपव।
कौसुंभम्। अण्। चो०। कुसुंभेन रक्तम्।
कौन्तेयकः। ढकञ्। शै०। कुन्तेजातादिः। असिरेव। अन्यः कौन्तः अण्
कौन्तेयम्। ढञ्। कुन्तौ भवम्।
कौन्तेयकः। वुञ्।
क्रमकः। वुन्। चा० क्रममधीते। वेद वा।
क्रयविक्रयिकः। ठन्। ठ०। क्रयविक्रयेन जीवति।
क्रयिकः। ठन्। ठ०। क्रयेन जीवति।
क्रशिमा। इमनिच्। कृशस्य भाव इति।
क्रशिष्ठः। इष्ठन्। प्रागि०। सर्वेषामतिशयेन कृश इति।
कुंचकीयः। छः। शै०। कुंचकस्यायम्।
क्रौशशतिकः। ढन्। कन्। ठञ्०। क्रोशशतं गच्छतीति।
क्व। अत्। प्राग्दि०। अव्ययः कस्मिन् काले इति कस्मिन् देशे। स्थाने च
क्वत्यः। त्यप्। शै०। क्वभवः। जातादिर्वा।
खरः। रः। म०। खरमिन्द्रियं राति। अभिभवतीति।
खल्यम्। यत्। छ०। खलाय हितं। खलः खलवाडा अन्नकीधड़ इतिभाषा
खल्या। यः। चा०। खलानां समूहः।
खादिरम्। अञ्। प्रा०। खदिरस्य विकाररूपमवयवस्यं वा।
खानित्रिकः। ठक्। खनित्रेण खनति।
गजता। तल्। चा०। गजानां समूहः।
गण्यः। यत्। प्राग्घितीयः। गणं लब्धा।
गरिमा। इमनिच्। गुरोर्भाव इति।
गरिष्ठः। इष्ठन्। प्रागि०। सर्वेषामतिशयेन गुरुरिति।

गरीयान्। ईयसुन्। प्रागि॰। अयमेषामतिशयेन गुरुरिति।
गव्यम्। यत्॰ अप॰ गोर्विकारादि। गोरिदं गोर्विकारो वेति।
गव्यं॰। यत्॰। प्रा॰। गोर्विकारः। यत्॰ छ। गोभ्यो हितं गव्यं।
गाङ्गः। अण्। अप॰। गङ्गाया अपत्यम्।
गाङ्गायनिः। फिञ्। अप॰। गङ्गाया अपत्यम्।
गाङ्गेयः। ढक्। अप। गङ्गाया अपत्यम्।
गाणपतम्। गणपतेरपत्यादि॰ अप॰। अण्।
गाणपत्यः। गणपतेरपत्यादि॰। मंत्रविशेषः ण्य ञ। अप।
गाणिक्यम्। ष्यञ्। चा॰। गणिकानां समूहः
गांभीर्यम्। ष्यः। प्रौ॰। गंभीर पुरुषाद्दौ भवम्।
गार्गेः। ण॰। अप॰। गार्ग्याः अपत्याः यस्येति ईलोपः।
गार्गिकः। ठक्। गार्ग्याः अपत्यम्।
गार्ग्यः। ण्यः। अप॰। गर्गस्य गोत्रापत्यं। यञ् वा। गर्गस्य गोत्रापत्यं।
गार्भिणम्। अण्। चा॰ गर्भिणीनां समूहः।
गार्ग्यायणः। फक्। अप॰। गार्ग्यस्य युवापत्यं। फञ् वा।
गार्ष्टेयः। ढक्। अप॰। सकृत्प्रसूताया गोरपत्यः। गृष्टेः।
गार्गीयाः। छः। अप॰। गर्गाणां छात्राः।
गार्हपत्यः। यत्। प्राग्दि॰। गृहपतिर्यजमानः तेन संयुक्तो गार्ह
पत्योऽग्निः
गुणवान्। मतुप्। गुणो यस्य यस्मिन् वा भवंतीति स्त्री चेत् गुणवती।
गुणी। इनिः। गुणं यस्यास्तीति।
गुरुतमः। तमप्। अयं सर्वेषामतिशयेन गुरुरिति।
गोतमाः। अण्॰। अप॰। गोतमस्यापत्यानि। बहुत्वे। यथा।
गौतमः। गौतमौ। गौतमाः।
गोता। तल्। तञ्त्वन्। गोर्भावः इति तलं तन्त्रिकं।
गोत्वम्। त्व तत्त्वन्। गोर्भावः गोत्वम्।

गोनर्दीयः। छः। शै॰। गोनर्द देशेभवः।
गोमयम्। मयट्। मा॰। गोः पुरीषम्।
गोरूप्यम्। रूप्यः। प्र। गोभ्यो हेतुभ्य आगतमिति।
गौधारः। आरक्। अप॰। गोधाया अपत्यम्।
गौधेयः। ढक्। अप। गोधाया अपत्यम्।
गौधेरः। द्रक्। अप। गोधाया अपत्यम्।
गौनर्दः। अण्। शैषि। गोनर्दे भवः।
गोपुच्छिकः। ठञ्। ठ। गोपुच्छेन तरति।
गौरवम्। अण्। गुरोर्भावः इति। नन्द्रन्त्र।
गौरुतल्पिकः। ठक्। ठ॰। गुरुतल्पंगच्छतीति।
ग्रामता। तल्। चा॰। ग्रामाणाम्। समूहः।
ग्रामेयकः। ढकञ्। शै॰। ग्रामेजातादिः।
ग्राम्यः। यः शै॰। ग्रामेजातादिः।
ग्रामीणः। खञ्। शै॰। ग्रामेजातादिः।
ग्रैवः। अण्। शै॰। ग्रीवायांजातादिः। विस्फोटकाद्याः।
ग्रैवेयम्। ढञ्। शै। ग्रीवायांभवम्।
ग्रैवेयकः। ढकञ्। शै। ग्रीवायांशोभते भवो।
ग्रैवेयकम्। ढकञ्। शै॰। ग्रीवायांशोभवंला।
ग्रैष्मम्। अण्। शै॰। ग्रीष्मेभवम्।
ग्रैष्मिकम्। वुञ्। शै। ग्रीष्मे जातम्।
ग्लुचुकायनिः। फिञ्। अप॰। ग्लुचुकस्य गोत्रापत्यं सामान्या पत्येपि
ग्लौचुकायनः। अण्। अप॰। ग्लुचुकायनेः युवापत्यं। तत्छात्रोपि
घटिकः। ठन्। ठ। घटेन तरति।
चतुर्थः। अन्। भागिथी॰ चतुर्थो भाग इति।
चतुर्धा। धा॰। भागि। धी॰। चतुः प्रकारः इति।

चपलतमा। तमप्। प्रागि॰ सर्वेषामतिशयेन चपला इति।
चपलतरः। तरप्। प्रागि॰। अयमनयोरतिशयेन चपलः।
चरकाः। णिनिः। शै॰। चरकेण प्रोक्तमधीयते प्रत्ययस्य लुक्।
चर्मण्वती। मतुप्। मं॰। चर्माण्यस्यामस्या वा।
चाक्रिणः। अण्॰ अप॰। चक्रिणः अपत्यम्।
चाटकैरः। ऐरक्। अप॰। चटकाया अपत्यम्।
चांडालकिः। इञ्। अप॰। चांडालस्यापत्यम्।
चाणकीनम्। खञ्। मं॰। चणकानां भवनं क्षेत्रं।
चान्द्रम्। अण्॰ शै॰। चन्द्रेण दृश्यते।
चान्द्रमासी। अण्॰। ठञ्॰। चन्द्रे मासेषु भवती या।
चातुर्वर्ण्यम्। ष्यञ्। नञ्तत्। चत्वारो वर्णाः इति।
चातुर्हायनम्। अण्। चतुर्हायनस्य भावः इति।
चारकीणम्। खञ्। ऋ॰। चरकाय हितमिति।
चारायणः। फक्। चरस्य गोत्रापत्यम्।
चाक्षुषम्। अण्॰। शै॰। चक्षुषा गृह्यते इति रूपम्।
चिरत्नम्। त्नः। शै॰। चिरकाले भवं। चिरकालाद्भूतम्।
चिरन्तनम्। ट्यु। ट्युल्॰ शै॰। चिरकालान्भूतम्।
चिरंतराम्। आमु। प्रागिवी। चिरंतरमेव चिरंतराम्। अव्य॰
चूडालः। लच्। चूडा यस्यास्तीति।
चैत्रः। अण्॰ चा॰ चैत्री पौर्णमासी यस्मिन्मासे सः।
चैत्रवत्। वतिः। नञ्तत्। चैत्रस्येवेति।
चैत्रिकः। ठक्। चा। चैत्री पौर्णमासी यस्मिन्मासे सः।
छात्रः। णः। ठ॰। गुरोर्दोषाणामाच्छादनशीलमस्येति।
छान्दोग्यम्। ञ्यः। शै॰। छन्दोगानां धर्म आम्नायो वा।
जघन्यः। यत्। तत्रा॰। जघन्यमिवेति।

जनकीयम्। छः। शै०। जनेभवं। जनस्येदंवा।
जनता। तल्। षा०। जनानांसमूहः।
जंबु। अञ्। मा०। तस्यलोपान्नवृद्धिः। जंब्वाःविकाररूपं। फलंजंबु
जाड्यम्। ष्यञ्। तद्धि०। जडस्यभावइति।
जातुषम्। अण्। मा०। जतुनोविकाररूपं। अवयवरूपंवा।
जानकी। अण्। अप०। जनकस्यापत्यंस्त्री।
जानपदः। अण्। जनपदोयस्यसः।
जानुदघ्नम्। दघ्नच्। जानुप्रमाणमस्यजलस्येति।
जिह्वामूलीयम्। छः। शै०। जिह्वामूलेभवं।
ज्यायान्। ईयसुन्। प्राग०। अयमेषामतिशयेन ज्येष्ठइति।
ज्येष्ठः। इष्ठन्। प्राग०। सर्वेषामतिशयेन वृद्धःप्रशस्योवाइति।
ततः। तस्। तसिल्। प्राग्दि०। अव्य०। तस्मादिति।
ततरः। डतर। प्रागिवी। तत्संख्याकः।
ततस्त्यः। त्यप्। शै०। ततोभवः ततोजातादिर्वा।
तत्कः। कन्। म०। तस्यायंतत्कः।
तत्र। त्रल्। प्राग्दि०। अव्य०। तस्मिन्निति।
तथा। थाल्। प्राग्दि०। अव्य०। तेनप्रकारेणेति।
तत्रत्यः। त्यप्। शै०। तत्रभवः। तत्रजातादिर्वा।
तदा। दा। प्राग्दि०। अव्य०। तस्मिन्कालेइति।
तदानीम्। दानीम्। प्राग्दि०। अव्य०। तस्मिन्कालेइति।
तदीयः। छः। शै०। तस्मिन्भवः। तस्यायंवा।
तद्वर्गः। शै०। तत्सजातीयसमूहः।
तद्वर्गीयः। छः। शै०। तद्वर्गस्यायम्।
तद्वर्गीणः। खः। शै०। तद्वर्गेभवः।
तनिमा। इमनिच्। तद्धि०। तनोर्भावः इति।

तनिष्ठः। इष्ठन्। प्राग्। सर्वेषामतिशयेन तनुरिति।

तपस्वी। विनिः। म०। तपोस्यास्तीति।

तत्रभिया। स्त्रः। शौ०। तत्र भवः

तर्हि। र्हिल्। प्राग्। अव्य०। तस्मिन्काले। तदा इति।

तवकः। अकच्। प्राग्।वी। तव अयमिति।

तान्तुवायिः। इञ्। अप०। तंतुवायस्यापत्यम्।

तान्तुवाय्यः। एयः अप०। तंतुवायस्यापत्यम्।

तावकः। अण्। शै०। तव अयम्।

तावकीनः। खञ्। शै०। तव अयम्।

तावतिकः। कन्। इडागम। आर्हीं। तावताक्रीतः।

तावत्कः। कन्। आर्हीं। तावताक्रीतः।

तावान्। मतुप्। म। तावत् प्रमाणमस्येति।

तारकितम्। इतच्। म। तारकाः सञ्जाता अस्येति। नभः।

तालम्। अण्। प्रा०। तालस्य विकाररूपम्। तालं धनुः। अन्य तालमयम्।

तालव्यः। यत्। तालुनि भव इति।

तालण्यः। अण्। अप०। तलणः अपत्यम्।

तालण्यः। एयः। अप। तलणः अपत्यम्।

तिलतैलम्। तैलच्। म। तिलानां स्नेहः इति।

तिलमयम्। मयट्। प्रा। तिलानां विकाररूपम्। संज्ञायां तैलम्। अण्। प्रा०।

तिल्यम्। यत्। त्र०। तिलेभ्यो हितम्। तिल्यं। यत्। म०। तिला नां भवनं क्षेत्रं तिल्यम्।

तुन्दिकः। ठः। म०। तुन्दमस्यास्तीति।

तुन्दिवान्। मतुप्। म०। इलच् च। तुन्दोस्यास्तीति।

तुन्दी। इनिः। म०। तुन्दमस्यास्तीति।

तुरीयः। छः। म॰। चतुर्णां पूरणः तुरीयः।
तुर्यः। यत्। म। चतुर्णां पूरणः।
तुल्यम्। यत्। प्राग्वि। तुलया सम्मितम्।
तृणसम्। सः। चा॰। तृणैः निर्वृत्तं। कृष्यादि।
तृण्या। यः। चा॰। तृणानां समूहः। मार्जनी। रज्जुर्वा।
तृतीयः। तीयः। म॰। त्रयाणां पूरकः इति।
तृतीयकम्। कन्। म॰। तृतीय एव तृतीयकः। कन्। प्राग्विवीयः
तृतीयकः तार्तीयकः।
तृतीयाकरोति। डाच्। तृतीयं कर्षणं करोतीति।
तेजस्वी। विनिः। म॰। तेजोऽस्यास्तीति।
तैकायनिः। फिञ्। अप। तिकस्यापत्यम्।
तैत्तिरीयाः। छः। शै॰। तित्तिरिणा प्रोक्तमधीयते।
तैन्तिडीकम्। अण्। प्रा॰। तिन्तिडीकस्यावयवरूपं विकाररूपं वा। अण्। ठ॰। तिन्तिडीकेन संस्कृतम्।
तैर्थः। अण्। शै॰। तीर्थादागतः।
तैलम्। अण्। शै॰। तिलस्येदम्। तिलानां वा।
तैलंपाता। खः। चा। तिलानां पातोऽस्यां स्वधायां इव नेता।
तैलीनम्। खञ्। म॰। तिलानां भवनं क्षेत्रमिति।
तैडः। अण्। शै॰। तिडं व्याख्यानो ग्रन्थः। तिडः तत्र भवं तैडः।
तौल्वलायनः। फक्। अप॰। तौल्वलेः युवापत्यम्।
तौल्वलिः। इञ्। अप॰। तुल्वलस्य गोत्रापत्यम्।
तौंविकः। ठक्। ठ॰। तुंब्या तरतीति।
त्रयम्। तयप्। म। त्रयः अवयवाः यस्येति।
त्रपालुः। आलुच्। म॰। त्रपा लज्जा यस्यास्तीति
त्रपिष्ठः। इष्ठन्। प्राग्वि॰। सर्वेषामतिशयेन तृप्तः इति।

त्रापुषम्। अण्। मा०। त्रपुणः विकाररूपं त्रापुषं। अवयवरूपं वा।
त्रिः। सुच्। तद्धा०। त्रिवारमिति।
त्रिकम्। कन्। म०। त्रयमेवेति
त्रितयम्। तयप्। म०। त्रयः अवयवाः यस्येति।
त्रिधा। धा। प्राग्दिवी। अव्य। त्रिप्रकारः इति।
त्रिंशकः। डवन्। आर्ही। त्रिंशताक्रीतः।
त्रेधा। एधाच्। प्राग्दिवी। त्रिप्रकार इति।
त्रैगर्त्तः। अञ्। अप०। त्रिगर्त्तस्येति।
त्रैगर्त्तकः। वुञ्। शै०। त्रिगर्त्ते जातादिः।
त्रैगुणिकः। ठक्। ठ०। त्रिगुणं प्रयच्छतीति।
त्रैगुण्यम्। ष्यञ्। चा०। त्रयाणां गुणानां समूहः।
त्रैधम्। धमुञ्। प्राग्दिवी०। अव्य०। त्रिप्रकारमिति।
त्रैष्टुभम्। अण्। चा०। त्रिष्टुब्इव।
त्रैहायनम्। अण्। नञ्स्नञ्। त्रिहायनस्य भावः। इति।
त्वत्कः। कन्। म०। त्वदीयोयं त्वत्कः।
त्वदीयः। छः। शै०। तव अयम्।
त्वद्वर्गीणः। खः। शै०। त्वद्वर्गे भवः।
त्वद्वर्गीयः। छः। शै०। त्वद्वर्गे भवः।
त्वद्वर्ग्यः। यत्। शै०। त्वद्वर्गे भवः।
त्वङ्मयम्। मयट्। मा०। त्वचो विकाररूपम्। अवयवरूपं वा।
दंडी। इनिः। म०। दंडोस्यास्तीति।
दंड्यः। यत्। आर्ही। दंडमर्हतीति।
दंतुरः। उरच्। म०। दंता उन्नता यस्य।
दंत्यः। यत्। शै०। दंते भवः दंत्यः।
दंत्यम्। यत्। छः। दंतेषु हितं दंत्यम्।

दविष्ठः। इष्ठन्। नञ्स्त्रञ्। सर्वेषामतिशयेनदूरइति।
दयालुः। आलुच्। म०। दयायस्यास्तीति।
दर्पचणः। चणप्। म०। दर्पेणवित्तइति।
दक्षिणतः। तसिल्। प्रागिवी। अव्य०। दक्षिणस्यादिति।
दक्षिणतआगतः। अतसुच्। प्रागि०। अव्य०। दक्षिणस्यांदिशिवा दक्षिणस्मिन्देशेवसति इति।
दक्षिणतोवसति। अतसुच्। प्रागि०। अव्यय०। दक्षिणस्मिन् देशेदक्षिणस्यांदिशिवावसति। इति।
दक्षिणागतः। आति। प्राग्दी०। अव्य०। दक्षिणस्माद्देशादागतः
दक्षिणादेशोरमणीयः। आच्। अत्रदक्षिणोदेशोरमणीयइत्यर्थः पंचम्याःभ्रमः।
दक्षिणाह्वसति। आति। प्राग्दि। अव्य०। दक्षिणस्मिन्देशेवसतीति
दक्षिणाहिग्रामाद्वसति। आहि। प्राग्दी०। दक्षिणस्यांदिशिग्रामस्य अदूरेवसतीत्यर्थः।
दक्षिणेनदेशोरमणीयः। एनपः। दक्षिणतः अयंदेशोरमणीयःइत्यर्थः दक्षिणेनेत्यत्रतृतीयाभ्रमः।
दाण्डा। णः। चा०। दंडःप्रहरणोस्याःक्रीडायांसा।
दाधिकम्। ठक्०। चा०। दध्निसंस्कृतं। ठक्। ठ। च। दध्नासंस्कृतम्।
दाधिकः। ठक्। ठ। दध्नाभक्षतीति।
दामनीयः। छः। तद्रा। दामनीयःदामनीयौ। बहुत्वे०। दामनीयः।
दारिद्र्यम्। ष्यञ्। नञ्स्त्र०। दरिद्रस्यभावः।
दार्ढ्यम्। ष्यञ्। नञ्स्त्रञ्। दृढस्यभावःइति दार्ढ्यम्।

दार्त्तेयम्। ढञ्। शै॰। दृतौभवम्। दृतिः। फूकाना। पिचकारी। ऊकाना। दस्तूर। वस्तिकर्म।
दार्षदाः। अण्। शै॰। दृषदिपिष्टाः। सक्ताद्याः।
दाशरथिः। इञ्। अप॰। दशरथस्यापत्यमिति।
दासेयः। ढक्। अप॰। दास्याः अपत्यम्।
दासेरः। ढ्रक्। अप॰। दास्याः अपत्यम्।
दात्तिः। इञ्। अप॰। दत्तस्यापत्यम्।
दात्तिणात्याः। त्यक्। शै॰। दत्तिणाभयम्। तत्रजातादिः।
दात्तिणायनः। फक्। अप॰। दात्तेरपत्यम्।
दिवातनम्। ट्यु। ट्युल्। दिनेभवम्।
दिव्यम्। यत्। शै॰ दिविस्वर्गे आकाशेचभवम्।
दिश्यम्। यत्। शै॰। दिशिभवम्।
दीर्घसत्रम्। अञ्। शै॰। दीर्घसत्रेभवम्।
दुःकुलीनः। खः अप॰। दुःकुलस्यापत्यम्।
दुःखी। इनिः। म॰। दुःखमस्यास्तीति।
दूरेत्यः। एत्यः। शै॰। दूरेभवः। जातादिर्वा।
देवकीयम्। छः। शै॰। देवेषुजातादि। देवानामिदंवा।
देवपथः। कन्। तद्धा। कनोलुक्। देवमार्गे
देवदत्तमयम्। मयट्। शै॰। देवदत्तादागतम्। देवदत्तस्यविकारोवा।
देवदत्तरूप्यम्। रूप्यः। शै॰। देव स्तादागतम्।
देवागारिकः। ठन्। ठ॰। देवागारेनियुक्तः।
दैत्यः। ण्यः। अप॰। दितेरपत्यम्।
दैवम्। अञ्। अप॰। देवस्यापत्यादि। दिविभवंवा।
दैव्यम्। यञ्। अप॰। देवस्यापत्यादि। दिविभवंवेति।

दैष्टिकः। ठक्। ठ। दिष्टंभाग्यंमतिरस्येति। प्राग्व्यानिश्रुय वाना।
दौषातनम्। ट्यु। ट्युल्। शै॰। रात्रौभवम्।
दौत्यम्। ष्यञ्। नञ्तत्। दूतस्यभावइति।
दौवारिकः। ठक्। द्वारेनियुक्तइति।
दौष्कुलेय। ढक्। अप॰। दुःकुलस्यापत्यम्।
दौष्कः। ठक्। चा॰। दोर्भ्यांचरतीति।
दौहित्रः। अण्॰। अप॰। दुहितुरपत्यम्।
द्रढिमा। इमनिच्। नञ्तत्। दृढस्यभावः।
द्रढीयान्। ईयसुन्। प्रागि॰। अयमेषामतिशयेनदृढइति।
द्रव्यम्। यत्। प्रा॰। द्रुर्हस्तस्यावयवोविकारोवा।
द्राघिमा। इमनिच्। दीर्घस्यभावइति।
द्राघिष्ठः। इष्ठन्। प्रागि॰। सर्वेषामतिशयेनदीर्घः।
द्राघीयान्। ईयसुन्। प्रागि॰। अयमेषामतिशयेनदीर्घइति।
द्रोणोध्नी। अनङ्॰। द्रोणप्रमाणमूधोयस्याइति।
द्रौणायनः। फक्। अप॰। द्रोणस्यगोत्रापत्यम्
द्रौणिः। इञ्। द्रोणस्यगोत्रापत्यम्।
द्वयम्। अयच्। म॰। द्वौअवयवौयस्येति।
द्वारिकः। ठक्। द्वारेनियुक्तइति।
द्विः। सुच्। तद्धि॰। द्विवारमिति।
द्विका। कन्। म॰। द्वौविशेनेयस्याम्।
द्विगुणाकरोति। डाच्। तद्धि॰। द्विवारंकरोति।
द्वितयम्। तयप्। म॰। द्वौअवयवौयस्येति।
वीयः। द्वितीयकः।
द्वितीयकः। कन्। म॰। द्वितीयएवद्वितीयकः। कन्। प्रागि॰
द्वितीयः। तीयः। म। द्वयोःपूरणोद्वितीयः।
द्वितीयाकरोति। डाच्। तद्धि॰। द्वितीयंकर्षणंकरोतीति।

द्विधा। धा। प्रागीवी। अव्य। द्विप्रकार इति।
द्विरात्रिकः। ठः। शै। द्वयोरात्र्योर्भवः।
द्विरात्रीणः। खः। ठञ्। द्वयोरात्र्योर्भवः इति।
द्विवार्षिकः। ठन्। ठञ्। द्वयोर्वर्षयोर्भवतीति।
द्विवर्षीणः। खः। ठञ्। द्वयोः वर्षयोर्भव इति।
द्विशूर्पिकम्। ठन्। आर्हीं। द्वाभ्यांशूर्पाभ्यांक्रीतम्।
द्वेधा। एधाच्। प्रागीवी। द्विप्रकार इति।
द्वैगुणिकः। ठक्। ठ। द्विगुणंप्रयच्छतीति।
द्वैगुण्यम्। ष्यञ्। नन्द्या। द्विगुणस्यभावः।
द्वैधम्। धमुञ्। प्रागीवी। अव्य। द्विप्रकारमिति।
द्वैपः। अञ्। चा। द्वीपिनोविकारः। द्वीपिचर्मणापरि नद्धं
द्वैपरिवृतः द्वैपः रथः।
द्वैप्यः। यञ्। शै। द्वीपेभवः जनादिर्वा।
द्वैप्यम्। यञ्। शै। द्वीपे जातादि।
द्वैमातुरः। अण्। अप। द्वयोः मात्रोरपत्यम्।
द्वैवार्षिकः। ठञ्। ठञ्। द्वयोर्वर्षयोरयमिति।
द्वैरात्रिकः। ठञ्। ठञ्। द्वयोः रात्र्योर्भवः इति।
द्वैहायनम्। अण्। द्विहायनस्यभावः।
द्वैहायनः। अण्। द्विहायनस्यभाव इति।
धनवत्। मतुप्। म। धनंविद्यतेयस्यतत्। अथवा। वतिः
धनेनतुल्यम्। अव्ययात्।
धनिकः। ठन्। म। धनमस्यास्तीति।
धनी। इनिः। धनंयस्यास्तीति।
धन्यः। यत्। प्राग्घि। धनंलब्धाइति। यत्। आर्हीं। धनेनयु
क्तः। धनस्ययोग्यः।

धन्यार्थी। इनि। म॰। धन्यार्थोऽस्यास्तीति।
धर्म्यम्। यत्। प्राग्धि। धर्मेण प्राप्यम्। इति। धर्मादनपेत।
धार्मिकः। ठक्। ठ॰। धर्ममाचरतीति।
धुर्यः। यत्। प्राग्धि॰। धुरंवहतियः।
धुर्या। यत्। प्राग्धि॰। धुरंवहतीति।
धूम्यः। यत्। यद्धि। धूमाय हितः।
धैनुकम्। ठक्। चा॰। धेनूनां समूहः।
धौरेयः। ढक्। प्राग्धि॰। धुरंवहति इति।
नडकीयम्। छः। चा॰। नडादिभ्यो दूरभवः।
नड्वलः। ड्वलच्। चा॰। नडानामदूरभव इत्यादि।
नड्वान्। ड्मतुप्। चा॰। नडानि सन्त्यस्मिन्।
नवीनम्। खः। तद्रा॰। नवमेव।
नस्यम्। यत्। छ॰। नासिकायां हितमिति।
नाकुलः। अण्॰। अप॰। नकुलस्यापत्यम्।
नागरः। अण्। शै॰। नगरेजातः।
नागरेयकः। ढकञ्। शै॰। नगरेजातादयर्थे।
नाटेरः। ढ्रक्। शै॰। नट्यांजातादिः। नटीसुतः।
नाट्यम्। ञ्यः। शै॰। नटानांधर्म आम्नायोवा।
नाडायनः। फक्। अप॰। नडस्यगोत्रापत्यम्। पौत्रवर्धे फक्
नाडिः। इञ्। अप॰। नडस्यापत्यम्। पुत्रपर्यंतमिञ् एव।
नादेयम्। ढक्। शै॰। नद्यांजातादि।
नापितायनिः। फिञ्। नापितस्यापत्यम्।
नापित्यः। ण्यः। अप। नापितस्यापत्यम्।
नाभ्यम्। यत्। छ॰। नाभौ हितमिति।
नारायणः। फक्। नरस्यगोत्रापत्यमिति।

नार्मदः। अण्। अप। नर्मदाया अपत्यम्।
नाविकः। ठन्। ठ। नावातरति। इति।
नाव्यम्। यत्। प्राग्घि। नावातार्य्यम्।
नासिक्यम्। यत्। यद्धि। नासिकायै हितम्।
नास्तिकः। ठक्। ठ। नास्तिपरलोकं यस्य मतौ सः।
नित्यः। त्यप्। शै। ध्रुवम्।
निद्रालुः। आलुच्। म। निद्रायस्यास्तीति।
नीलनीलम्। रूपम्। द्विरुक्तम्।
नीलम्। अन। चा। नीत्यारक्तं नीलम्।
नीचकैः। अकच्। नीचैरेव इति।
नूतनम्। तनप्। तद्धा। नवमिति।
नूत्नम्। त्नप्। तद्धा। नवमिति।
नेदिष्ठः। इष्ठन्। प्राग्घि। सर्वेषामतिशयेन अंतिक इति।
नैकटिकः। ठक्। ठ। निकटे वसतीति।
नैधेयः। ढक्। अप। निधेरपत्यम्।
नैपथ्यः। अण्। शै। नेपथ्ये जातादिः।
नैयग्रोधम्। अण्। प्राग्। न्यग्रोधस्य विकारः। पैत्रागमोत्र।
नैयायिकः। ठक्। चा। न्यायमधीते वेद वा।
नैल्यम्। ष्यञ्। चा। नीलस्य भाव इति।
नैशम्। अण्। शै। निशि भवम्। जातादि वा।
नैशः। अण्। शै। निशायां व्याहरति।
नैशिकः। ठञ्। शै। निशायां व्याहरति मृगः।
नैशिकम्। ठञ्। शै। निशि भवं। जातादि वा।
नैषध्यः। ण्यः। अप। निषधस्यापत्यं। निषधानां राजा वा।
नैषादकिः। इञ्। अप। निषादस्यापत्यम्।

नैष्किकः। ठञ्। प्रा। निष्कस्यविकारः नैष्किकः।

नैष्किकम्। अण्। प्राग्। निष्केनक्रीतम्।
न्याय्यम्। यत्। प्राग्हि। न्यायादनपेतम्।
पंचकः। कन्। आर्हीं। पंचभिःक्रीतः इति।
पंचकृत्वः। कृत्वसुच्। तद्रा। पंचवारंकृतमिति।
पंचजनीनम्। खः। छः। पंचजनेभ्योहितमिति।
पंचजनीयम्। छः। यद्धि। शस्त्र। जना यहितम्।
पचतितराम्। तरप्। अतिशयेन पचतीति तिङंतात्तरप्
पंचधा। धा। प्रागिवी। पंचप्रकारः इति।
पंचमः। अन्। प्रागिवी। पंचमोभागः।
पंचवारम्। घमंतात्। पंचधाप्रहृतः।
पंचदशः। डः। म। पंचदशानांपूरण इति।
पंचविंशः। डट्। म। पंचविंशतेःपूरक इति।
पटिष्ठः। इष्ठन्। प्रागि। अतिशयेनपक्ता।
पटीयान्। इष्ठन्। प्रागि। अयमेषांमतिशयेनपटुरिति।
पटुजातीयः। जातीयर् पटुप्रकार इति।
पटुत्वम्। त्व। चा। पटोर्भावः।
पटुतरः। तरप्। प्रागि। अयमनयोरतिशयेपटुरिति।
पटुता। तल्। त्वतलौ। पटोर्भावः इति।
पटुतमः। तमप्। प्रागि। अयमेषामतिशयेनपटुः
पटुपटुः। द्विरुक्तः।
पटुपट्वी। द्विरुक्तः।
पटुरूपः। रूपप्। प्रागिवी। पटुप्रकारः इति।
पटूकृतः। च्विः। तद्रा। अपटुःपटुर्भवतीति।

पटिष्ठः। इष्ठन्। प्रागि। अति
शयेन पटुरिति।

पंडितकल्पः। कल्पप्। प्रागि॰। ईषदूनः पंडितः पंडितकल्पः
पंडितपाशः। पाशप्। कुत्सितः पंडितः इति।
पथकः। वुन्। शै॰। पथिजातः। वुम्। म॰। पथिकुशलः।
पथिकः। ठन्॰। पंथानं गच्छतीति।
पथिकी। स्त्रियां। पथिकी। पंथानं गच्छतीति।
पथ्यम्। यत्। प्राग्धि॰। पथः अनपेतम्।
पदकः। वुन्। चा॰। पदमधीते वेत्ति वा।
पद्याः। यत्। प्राग्धि। पादौ विध्यंतीति। शर्कराः कंटका वा।
पयःपाशम्। पाशम्। कुत्सितं पयः इति।
पयस्यम्। यत्। प्रा॰। पयसो विकाररूपं। द्रव्यम्।
परकीयम्। छः। शै॰। परस्मिन् जातादि। परस्येदं वा।
परतः। तसिल्। प्रागिवी। अव्य॰। परस्मादिति।
परस्तात्। अस्तातिः। प्रागिवी॰। परस्यां॰। परस्याः दिशः। परा वा दिक् इति।
परारिः। आरिल्। प्राग्दि॰। अव्यय। पूर्वतरे वत्सरे इति।
परारि। आरिल्। शै॰। पूर्वस्मात्पूर्वस्मिन् वत्सरे इति।
परारित्नम्। त्नः। शै॰। पूर्वस्मात्पूर्वस्मिन् वर्षे जातम्।
परार्द्ध्यः। यत्। शै॰। परार्द्धसंख्याके काले जातादिः।
परावरीणः। खः। म। पराश्च अवराश्च अनुभवतीति।
परितः। तस्। प्राग्दि॰। अव्य॰। अष्टदिग्भ्य इति।
परीणः। खः। म॰। परस्परायम्।
परुत्। परुत्। पूर्वस्मिन्वत्सरे इति।
परुत्नम्। त्नः। शै॰। पूर्ववर्षे भवम्।
परेद्यवि। एद्यवि। प्राग्दि॰। अव्य॰। परस्मिन्नहनि इति।
पर्णीयम्। छ। शै॰। पर्णदेशे जातादि पत्रसंबन्धिनि तपसि। अण्।

पर्वतीयम्। छः। शै॰। पर्वते भवः। मनुष्यः। अन्यः पर्वतीयः पार्वतोपि।

पवर्गीयम्। छः। चा॰ क॰। शै॰। पवर्गे भवम्।

पश्चिमम्। डिमच्। शै॰। चा॰ वा॰ पश्चिमे भवम्।

पती। इनि। म॰। पतो यस्यास्तीति।

पांचजन्यः। न्यः। शै॰। पंचजन्ये भवः पांचजन्यः पंचजन्यः। शंखासुरः।

पांचालः। अण्। अप॰। पंचालानां राजा। पांचालस्यापत्यमिति वा। अत्र।

पांचाली। अण्। अप। पंचाल देशानां राज्ञी। पांचाली।

पांडुः। अण्। अप। पंडोरपत्यं। पांडूनां राजा वा।

पाणिनिः। इञ्। अप॰। शै॰। पाणिनां पुत्रापत्यम्।

पाणिनीयम्। छः। शै॰। पाणिनिना प्रोक्तं। पाणिनः वैयाकरणाः भक्तिः भागः अस्य स पाणिना उपज्ञातं।

पांथः। णः। ठन्॰। पंथानं गच्छतीति। स्त्रियां पांथा।

पाथेयम्। ढञ्। प्राग्हितं पथिसाधु। इति।

पाटलिपुत्रकः। वुञ्। शै॰। पाटलिपुत्रे जातादि। पटनाख्ये।

पात्रगारिः। इञ्। अप॰। पत्रगारस्य गोत्रापत्यं। ततः युवाप न्येफक तस्य लुक पिता पुत्रः स्युः।

पामनः। नः। म॰। पामा अस्यास्तीति।

पायसिकः। ठक्। शै॰। पायसं भक्तिः भागः। अस्य।

पारदारिकः। ठक्। ठ॰। परदारान् गच्छति। यः।

पारलौकिकम्। ठञ्। शै॰। परलोके भवम्।

पारायणीकः। ठन्। कन्॰। पारायणं वर्त्तयतीति। पारायणिकः। छात्रस्य।

पारावारीणः। खः। शै॰। पारावारेजातादिः। खः। म॰। पारावा
रेगामी पारावारीणः।
पारिपार्श्वकः। ठक्। ठ॰। परिपार्श्वेवर्त्तते इति। भृत्यः शिष्यो
पारियात्रिकः। ठक्। ठ॰। पर्योमुखितियज्ञाहश्चलंभोजनेनेदी
पारिषदः। अञ्। शै॰। परिषदः। अयं। अण्। प्राग्वि॰ परिष
दिसाधुः पारिषदम्।
पारिषद्यः। ण्यः। प्राग्वि॰। परिषदि समवायेसाधुः। पारिषद्यः।
पारीणः। खः। शै॰। पारेजातादिः। खः। म॰। पारेगामी। पारीणः
पार्थः। अण्। अप॰। पृथायाः अपत्यं पार्थः पृथा पा अपत्ये शेषपा
शेषइतिरूपसम्पादकः ढाचइत्यनेनढक्
स्यात्।
पार्थिवम्। अण्। तस्येदम्। पृथ्वीभावइति।
पार्थिवः। अ॰ वा। अञ्। शै॰। पृथिव्याअयम्।
पार्थिवा। नः। अप॰। पृथिव्याअपत्यादि।
पार्थिवी। अञ्। अप॰। पृथिव्याअपत्यादि।
पार्यात्रिकः। ठक्। ठग॰। पर्यात्रमित्यादि। पूर्णभोक्ता।
पार्वतायनः। फक्। अप॰। पर्वतस्यगोत्रापत्यम्।
पार्वतिः। इञ्। अप॰। पर्वतनऋषेः गोत्रपत्यम्।
पार्वती। इञ्। अप॰। पर्वतस्य अपत्यंस्त्रीपार्वती।
पार्शवः। अण्॰। तद्रा॰। पर्शुनायुधजीवीसंघएव।
पार्श्वतः। अण्॰। तद्रा॰। पार्शवो। वहूवे। पर्शवः।
पार्श्वतः। तसिल्। तद्रा॰। पार्श्वे इति।
पार्श्वतीयम्। छः। शै॰। पार्श्वतोभवम्।
पार्श्वधिकः। ठञ्॰। ठ॰। पर्श्वधः प्रहरणमस्येति।
पालाशः। अञ्। प्राग्दी। पलाशस्यावयवः।
पालाशम्। अण्॰। प्रा॰। पलाशानांविकाररूपमवयवरूपंवा।

पांसुरः। रः। म॰। पांसुः धूली अस्यास्तीति।
पाशुपतम्। अण्। चा॰। पशुपतिः शिवो देवतास्येति उद्देश्य
विशेषे पाशुपतः।
पाश्वम्। एस्॰। चा॰। पशूनां समूहः।
पाश्चात्यः। त्यक्। शै॰। पश्चाज्जातादिः।
पाश्यः। यः। चा। पाशानां समूहः।
पिच्छिलः। इलच्। म॰। पिच्छमस्यास्तीति।
पिंजिष्ठः। इष्ठन्। प्रागि॰। सर्वेषामतिशयेन पिंजिरः इति
पिंजीयान्। ईयसुन्। प्रागि॰। अयमेषामतिशयेन पिंजर इति
पितामहः। डामहच्। चा। पितुः पिता।
पितामही। डामहष्। चा। पितुर्माता।
पितृभोगीणः। खः। छः। पितृभोगार्थे हितः।
पितृव्यः। व्यत्। चा॰। पितुः भ्राता।
पितृष्वस्रीयः। छः। अप॰। पितृष्वसुरपत्यं पुमान्।
पित्र्यम्। यत्॰। चा॰। पितरः देवतास्येति। पितुरिदं वा शै॰
के। पितुरागतं धनम्।
पिष्टकः। कन्। प्रा॰। पिष्टस्य विकारविशेषः पिष्टको रूपः।
पिष्टमयम्। मयट्। प्रा॰। पिष्टस्य विकाररूपम्। भस्म।
रामचक्रे वडे वडीयाम्।
पीतः। मतुप्। म॰। पीतो गुणोस्यास्तीति।
पीतकम्। कन्। चा॰। पीतेन रक्तं वस्त्रं पीतकम्।
पुत्रपौत्रीणः। खः। म। पुत्रपौत्रमनुभवतीति।
पुत्रवलः। वलच्। म॰। पुत्राः अस्य संतीति।
पुत्रीयः। छः। यद्विधिं। पुत्राय हितः। छः। आर्हीं॰ पुत्रनिमित्तः।
पुत्रीयम्। छः। यद्वि॰। पुत्रेभ्यो हितम्।

पुत्रम्। यत्। अर्हो। पुत्रानिमित्तमिति।
पूर्वः। अस्ति। प्रागिवी। अत्र। पूर्वस्यांदिशि। पूर्वस्यावादिशः। पूर्वोवादिक्। इति।
पुरस्तात्। अस्तातिः। प्रागिवी। पूर्वस्यांदिशि। पूर्वस्यादिशः। पूर्वावादिक् इति।
पुरस्तादागतः। अस्तातिः। पूर्वस्यांदिशिवसति। पूर्वस्याःदिश आगत इतिवा पुरस्ताद्वसति।
पुरस्ताद्रमणीयः। अस्तातिः। पूर्वोदेशोरमणीयः। पुरस्ताद्रमणीयः।
पुंवत्। वतिः। पुंसस्तुल्यः।
पुंस्त्वम्। त्व। नञ्स्नञ्। पुंसोभावः इति।
पौंस्नम्। स्नञ्। नञ्स्नञ्। पुंसोभावः इति।
पूर्वतः। तसिल्। प्रागिवी। पूर्वस्मादिति।
पूर्वपदिकः। ठञ्। ठक्। पूर्वपदेन चरति इति वक्तव्ये पौर्वपदिकः। ठञ्। ठक्। पूर्वपदं गृह्णाति।
पूर्वाह्णकः। वुञ्। शै। पूर्वाह्णे जातः।
पूर्वाह्णकम्। वुञ्। शै। पूर्वाह्णे भवं।
पूर्वाह्णतनम्। ट्यु। ट्युल्। शै। पूर्वाह्णे जातम्।
पूर्वाह्णेतनम्। ट्यु। ट्युल्। शै। पूर्वाह्णे जातम्।
पूर्वेद्युः। एद्युस्। प्राग्दि। अव्य। पूर्वस्मिन्नहनि इति।
पूर्वेणादेशोरमणीयः। एनप्। प्राग्दी। पूर्वतःरमणीय इत्यर्थः अञ्चुत्तरीयाभ्रमः।
पृष्टतः। तसिल्। तद्ध। पृष्टे इति।
पैतृकम्। ठञ्। शै। पितुरागतम्।
पैतृष्वसेयः। ढक्। अप। पितृष्वसुरपत्यम्।
पैतृष्वस्रीयः। छण्। अप। पितृष्वसुःअपत्यम्।

पैत्तिकम्। ठक्। आर्हीं। पित्तस्य शमनं कोपनं वा।
पैप्पलम्। अण्। चा॰। पिप्पलस्य विकारः।
पैलेयः। ढक्। अप॰। पीलाया अपत्यम्। पीलाया अपत्यं पै लोपि।
पैलः। अण्। अप॰। पीलाया गोत्रापत्यं
ततः फिञ्। फिञोलुक्। अत्र पैलः पिता पुत्रश्च।
पौनःपुन्यम्। ष्यञ्। प॰ पुनः पुनरित्यस्य भावः
पौनःपुनिकः। ठञ्। शै॰। पुनः पुनर्भवः। जातादिर्वा।
पौरस्त्याः। त्यक्। शै॰। पुरः अग्रे जातादिः।
पौराणिकः। ठक्। चा॰। पुराणमधीते वेद वा। ठक्॰। शै॰
पुराणं वर्त्तयति।
पौरोहित्यम्। ष्यः। तन्त्रान्त। पुरोहितस्य भाव इति यक्
वा पुरोहितस्य भाव इति।
पौरुषम्। अण्। त॰। पुरुषः प्रमाणमस्य। शै॰। पुरुषस्येदम्।
पौरुषेयाः। ढञ्। ऊ॰। वध॰ विकार॰ समूह॰ तेन कृतेषु।
पौर्णमासी। अण्॰। ठञ्॰। पूर्णमासोऽस्यां भवति इति।
पौरवः। अण्॰। अप॰। पूरूणां राजा। पूरोरपत्यमपि।
पौर्वशालः। ञः। शै॰। पूर्वस्यां शालायां भवः।
पौर्वमद्रः। अञ्। शै॰। पूर्वमद्रे भवः।
पौषः। अण्। चा॰ पुष्येण युक्ता पौर्णमासी पौषी पौषी पौर्ण
मासी यस्मिन्मासे सः।
पौषम्। अण्॰। चा॰ पुष्येण युक्तमहः पौषमहः।
पौषी रात्रिः। स्त्रीत्वेन। पौषी।
पौंस्नः। स्नञ्। अप॰। पुंसि भवः। पुंसः अयं। पुंसः अधीनः।
पौंस्नम्। स्नञ्। तन्त्रान्त॰। पुंसो भावः इति।
प्रकटम्। कटच्। तन्त्रान्त। प्रकर्षेण ज्ञायते इति।

प्रतनम्। तनप्। तद्धिता०। पुरातनमिति।

प्रतीच्यम्। यत्। शै०। प्रतीच्यांभवम्।

प्रत्नम्। त्नप्। तद्धि०। पुरातनमिति।

प्रथिमा। इमनिच्। तन्त्रम्। पृथोर्भावइति।

प्रथिष्ठः। इष्ठन्। प्रागि०। सर्वेषामतिशयेन पृथुरिति।

प्रदोषकः। वुन्। शै०। प्रदोषेजातः।

प्रस्थमात्रम्। मात्रच्। म०। प्रस्थप्रमाणमस्य।

प्राकट्यम्। ष्यञ्। तन्त्रम्। प्रकटस्यभावः।

प्राच्यम्। यत्। शै०। प्राच्यांभवंप्राच्यम्।

प्राच्यीयाः। छः। शै०। प्राच्येषुभवाः।

प्राजापत्यः। ण्यः। अप०। प्रजापतेरपत्यादि।

प्राजापत्यम्। यक्। प्रजापतेःभावः

प्रातिजनीनः। खञ्। प्राग्वि। प्रतिजनंसाधुः।

प्रातिकूलिकः। ठञ्। ठ०। प्रतिकूलंवर्त्ततेइति।

प्रातिलोमिकः। ठक्। ठ०। प्रतिलोमंवर्त्ततेइति।

प्रातीपिकः। ठक्। ठ०। प्रतीपंवर्त्ततेइति।

प्रादोषिकम्। ठक्। ठ०। प्रदोषेजातादि।

प्रावृषिकः। ठक्। चा०। प्रावृषःइदं। सादेवतास्येतिवा।

प्रावृषेण्यः। एण्यः। शै०। प्रावृषिभवः। जातादिवा।

प्रास्थिकम्। ठञ्। आर्हो। प्रस्थस्यभावइति।

प्रास्थिकी। ठञ्। आर्हो। प्रस्थस्यभावःस्त्रीत्वेचेत्

प्राह्णेतनम्। ट्यु। ट्युल्। प्राह्णकालेभवम्।

प्राज्ञः। णः। म०। प्रज्ञाअस्यास्तीति।

प्राज्ञी। प्रज्ञ एव प्राज्ञः। स्त्रीचेत्प्राज्ञी।

प्रियतमः। तमप्। प्रागि०। अयंसर्वेषामतिशयेनप्रियःइति

स्त्रीचेत्प्रियतमा।

प्रियतरः। तरप्। पाणि०। अयमनयोरतिशयेनप्रियः।
प्रीणम्। ख्वः। लक्षा०। प्रणनमिति।
प्रेमा। इमनिच्। भा०। प्रियस्यभावइति।
प्रेयान्। ईयसुन्। पाणि०। अयमेषामतिशयेनप्रियइति।
प्रेष्ठः। इष्ठन्। पाणि०। सर्वेषामतिशयेनप्रिय इति।
प्रैयंगवीनम्। खञ्। पा०क्षे०प्रियंगूनांभवनंक्षेत्रमिति।
प्रौष्ठपदिकम्। ठञ्। चा०। प्रौष्ठपददेवता अस्य।
प्रौष्ठपादा। अण्। पौ०। प्रौष्ठपदासुजातः प्रौष्ठपादा भवार्थे
न प्रौष्ठपदः। सर्वपदे हृद्धिर्जातार्थे उत्तरपदहृद्धिः
प्लाक्षम्। अण्। पा०। प्लक्षस्यावयवरूपंविकाररूपंवा।
फाल्गुनिकः। ठक्। चा०। फाल्गुनीनक्षत्रेणयुक्तापौर्णमासी
यस्मिन्मासेसः।
फलिनः। इनच्। फलानिअस्यसंतीति।
फाल्गुनः। अण्। चा०। फाल्गुनीनक्षत्रेणयुक्तापौर्णमासी
यस्मिन्मासेसः।
फेनिलः। इलच्। म०। फेनोस्यास्तीति।
बंधुता। तल्। चातु०। बंधूनांसमूहः।
बन्यः। यत्। पौ०। वनेभवः।
बली। इनि। म०। बलमस्यास्तीति।
बलीयान्। ईयसुन्। पाणि०। अयमेषामतिशयेनबलीइति
बल्यम्। यः। चा। बलमस्यास्तीति।
बहिमा। इमनिच्। भा०। बहुलस्यभावइति।
बहुकः। कन्। आर्ही०। बहुभिः क्रीतः इति।
बहुतः। तस्। प्राग्दी०। अस्मात् बहुभ्य इति।
बहुत्र। त्रल्। प्राग्दि०। अस्य। बहुष्विति।

बहुधा। धा॰। प्राग्दी॰। बहुप्रकारः इति। बहुशः। शस्। तद्धि॰। बहूनि इति।
बाकम्। अण्॰। चा॰। बकानांसमूहः।
बांगः। अण्॰। अप॰। बंगदेशस्यराजा। बंगस्यापत्यंवा।
बांगी। अण्॰। अप॰। बंगदेशानांराज्ञी।
बाडवम्। यत्॰। चा॰। वडवानांसमूहः।
बांधकिनेयः। ढक्। अप॰। बंधक्याअपत्यंबांध॰।
बालकवत्। वत्। तस्मिन् । बालकेइवतुल्यम्।
बाभ्रव्यः। यञ्। अप॰। बभ्रोःगोत्रापत्यं। कौशिकऋषिः।
बार्हस्पत्यम्। ष्यञ्॰। तस्यत्व॰। बृहस्पतेर्भावइति।
बाहुकः। ठञ्। ठा। बाहुभ्यांतरति।
बाहविः। इञ्। अप॰। बाहोरपत्यम्।
बाहृच्यम्। ण्यः। शै॰। बहृचांनांधर्मआम्नायोवा।
बृंदारकः। आरकन्। बृंदमस्यास्तीति।
बृंदिष्ठः। इष्ठन्॰। प्रागि॰। सर्वेषामतिशयेनवृन्दारकः।
बृंदीयान्। ईयसुन्। प्रागि॰। अयमेषामतिशयेनबृंदिष्ठः।
वैणकीयम्। छण्॰। शै॰। वेणोरिदम्।
बैजवापीयः। छः। शै॰। बीजवापिनांधर्मःरीतिर्वा।
ब्रह्मण्यम्। यत्। छ॰। ब्रह्मणेहितम्।
ब्रह्मता। तल्॰। तस्यत्व॰। ब्रह्मणोभावःइति।
ब्रह्मत्वम्। त्व। तस्यत्व॰। ब्रह्मणोभावःइति।
ब्राह्मम्। अण्॰। शै॰। ब्रह्मणःइदं। चा॰। ब्रह्मदेवतास्य
ब्राह्मंहविः।
ब्राह्मणः। अण्॰। अप॰। ब्रह्मणःअपत्यम्।
ब्राह्मणकल्पः। कल्पप्। ईषदूनोब्राह्मणं। ब्राह्मणग्रंथो
नसमाप्यतेइतिवा।

ब्राह्मणकीयम्। छः। शै॰ ब्राह्मणस्येदं ब्राह्मणेजानादि वा।
ब्राह्मणवत्। वतिः। तस्त्र॰। ब्राह्मणेनतुल्यमिति।
ब्राह्मण्यम्। यत्। चा॰ ब्राह्मणानां समूहइति। ष्यञ्॰। तस्यभावः। ब्राह्मणस्यभावः।
ब्राह्मी। अण्। शै॰ ब्रह्मणः इयं वृत्तिः। चा॰ ब्रह्मादेवतास्या ऋचः सा।
ब्राध्नायनः। चफञ्। अप॰ ब्रध्नस्यगोत्रापत्यम्।
ब्राध्नायन्यः। ञ्यः। अप॰ ब्राध्नायनएवब्राध्नायनः। पुंस्येवञ्यः।
ब्रीहिमयः। मयट्। प्रा॰ ब्रीहीणां विकारः पुरोडाशः अन्यत्र ब्रैहं। अण्। प्रा॰
ब्रैहेयम्। ढक्। स॰। ब्रीहीनांभवनंक्षेत्रमिति।
भवदीयः। छः। शै॰ भवतः अयम्।
भाक्तिकः। ठक्। ठ॰। भक्तमस्मैनियुक्तं दीयतेसः।
भागवित्तिकः। ठक्। अप॰। भागवित्तेरपत्यम्। भागवित्तायनः। फक्। स्त्री भागवित्तिकायनस्य।
भागीरथः। अञ्। अप॰। भगीरथस्यापत्यम्।
भागीरथी। अण्। शै॰। भगीरथेन मार्गात् आनीतानेत्यादि।
भाद्रमातुरः। अण्। अप॰। भद्रमातुरपत्यम्।
भारतः। अण्। चा॰। भरताः योद्धारोस्य संग्रामस्यइति।
भार्गवः। अण्। अप॰। भृगोरपत्यम्।
भावत्कः। ठञ्। शै॰। भवतः अयम्।
भास्मः। अण्। प्रा॰। भस्मनोविकारः।
भास्मनः। अण्। प्रा॰। भस्मनोविकारः।
भूमा। इमनिच्। तस्त्वञ्। बहोः भावइति। अत्रविशेषः।
भूयिष्ठः। इष्ठ॰। प्राग्॰। सर्वेषामतिशयेनबहुरिति।

भार्गवः। अण्। अप॰। भृगोरपत्यानि। अणोलुकि भृगवः।
भैषज्यम्। ष्यञ्। स्वा॰। भेषजस्येति।
भैक्षम्। अण्। चा॰। भिक्षाणां समूहः।
भौजकटीयः। छः। शै॰। भोजकटे भवः।
भौजकटः। अण्। शै॰। भोजकटे भवः।
भ्रातृवलः। वलच्। म॰। भ्रातरः अस्य सन्तीति भ्रातृवलः।
भ्रातृव्यः। व्यन्। अप॰। भ्रातुरपत्यम्। व्यन् शत्रुतायां।
भ्रातृव्यः। आत्मनः शत्रुः।
भ्रात्रीयः। छः। अप॰। भ्रातुरपत्यम्।
भ्रामरम्। अण्। शै॰। भ्रमरेण मक्षिकया हृतं भ्रामरं मधु
भ्राष्ट्राः। अण्। चा॰। भ्राष्ट्रे संस्कृता धानाः।
मणिवः। वः। म॰। मणिः यस्यास्तीति।
मत्कः। कन्। म॰। मदीयोऽयं मत्कः।
मंत्री। इनिः। म॰। मंत्रं यस्यास्तीति।
मथुरावत्। वतिः। तत्र॰। मथुरायामिवेति।
मदीयः। छः। शै॰। मम अयम्।
मद्रकः। कन्। शै॰। मद्रेषु जातादिः।
मद्रवर्गीणः। खः। शै॰। मद्रवर्गे भवः।
मद्रवर्गीयः। छः। शै॰। मद्रवर्गे भवः।
मद्रवर्ग्यः। यत्। शै॰। मद्रवर्गे जातादि।
मधुमान्। मतुप्। चा॰। मधु अस्त्यस्मिन्।
मधुरः। रः। म॰। मधु अस्यास्तीति। मधोः भावः इति वा।
मध्यतः। तसिल्। तद्रा॰। मध्ये इति।
मध्यमः। मः। शै॰। मध्ये भवः। मध्ये जातादिर्वा।
मनस्वी। विनिः। म॰। मनोऽस्यास्तीति।

ममकः। अकञ्। प्राग्दि॰। ममत्र्ययमिति।
महिमा। इमनिच्। नल्लन्। महतोभावइति।
महीयान्। ईयसुन्। प्राग्दि॰। अयमेषामतिशयेनमहा
न्इति।
मागधः। अण्। अप॰। मगधदेशस्यराजा।
मगधस्यापत्यंवा।
मागधी। अण्। अप॰। मागधस्यापत्यंकन्या। शै॰। म
गधस्येयं मगधेभवावा।
माघी। अण्। चा॰। मघयायुक्तापौर्णमासी।
मांजिष्ठम्। अण्॰। चा॰। मंजिष्ठयारक्तंवस्त्रंमांजिष्ठम्।
मांडूकेयः। ढक्। अप॰। मंडूकस्यापत्यम्।
मांडूकिः। इञ्। अप॰। मंडूकस्यापत्यम्।
मांडूकः। अण्। अप॰। मंडूकस्यापत्यम्।
मातामहः। डामहच्। चा॰। मातुःपिता।
मातामही। डामहच्। चा॰। मातुर्माता।
मांस्यिकः। ठक्। ठ॰। मत्स्यान्हंतीति।
मातुलः। डुलच्। चा॰। मातुःभ्राता।
मातृभोगीणः। खः। ख॰। मातृभोगेभ्योहितः।
मातृष्वसेयः। ढक्। अप॰। मातृष्वसुरपत्यम्।
मातृष्वस्रीयः। छण्। अप॰। मातृष्वसुरपत्यम्।
माधव्यः। यञ्। अप॰। मधोःगोत्रापत्यं। ब्राह्मणश्चेत्।
माधुर्यम्। ष्यञ्। भ॰। मधुरस्यभावः।
मानवीनम्। खञ्। ख॰। मानवापहितमिति।
मानुषः। अञ्॰। अप॰। षुकागमः। मनोःजातमपत्यं। अत्र
जातिःसमुदायार्थे।
मानुष्यः। यञ्। अप॰। षुक्। मनोःजातमपत्यम्।

मानुष्यकम्। वुञ्। चा०। मनुष्याणांसमूहः।
मामकः। अण्। शै०। ममायम्।
मामकीनः। खञ्। शै०। ममायम्।
मायावी। विनिः। म०। मायास्यास्तीति।
मायूरम्। अञ्। चा०। मयूराणांसमूहः। मयूरस्यअवयवः विकारोवामायूरः।
मार्कंडेयः। ढक्। अप०। मर्कण्डोरपत्यम्।
मायूरिकः। ठक्। ठ०। मयूरान्हंतिइति।
मारिचकम्। ठक्। ठ०। मरिचेनसंस्कृतम्। मारिचकंवा
मार्गिकः। ठक्। शै०। मार्गेदृश्यतेति। ठक्। ठञ्०। मृगान्हंतीतिवा।
मार्त्तिकः। अण्०। प्राग्दी०। मृत्तिकायाविकारः।
मार्दंगिकः। ठक्। ठ०। मृदंगस्यवादनंशिल्पमस्येति।
मार्द्दवम्। अण्०। नञ्स्नञ्। मृदोर्भावइति।
माली। इनिः। म०। मालास्यास्तीति।
मालीनः। खः। शै०। मालयाशोभते।
मालीयः। छः। शै०। मालायांभवादि।
माशाब्दिकः। ठक्। ठ०। माशब्दःकारिइतिप्रआह। म०। अहःलोपः।
माषीनम्। खञ्। म०। माषाणांभवनंक्षेत्रम्।
माष्यम्। यत्। छ०। माषेभ्योहितं। यत्। म०। माषानांभवनंक्षेत्रंमाष्यम्।
मासिकः। ठञ्। ठञ्०। मासंभूतोमासिकःकर्मकारः। मासंभूतोमासिकाव्याधिः मासंभवतीतिमासिक उत्सवः।

मासिकम्। ठक्। चा॰। मासस्येदम्। ठक्। शै॰। मासेदेयं ऋणं।
माहाराजिकम्। ठञ्। चा॰। महाराजस्येदम्। सदेवतास्येति वा।
माहिषिकः। अण्। शै॰। महिषिके देशे जातादिः नगरे वा।
माहेन्द्रम्। अण्॰। चा॰। महेन्द्रो देवतास्य
माहेन्द्रियम्। ञ्य। चा॰। माहेन्द्रो देवतास्य।
माहेयम्। ढक्॰। शै॰। मह्यांजातादिः
मुखतीयम्। छः। शै॰। मुखतोभवं। संमुखेवाजातम्।
मूर्द्धन्यः। यत्। मूर्द्धिभव इति।
मुखरः। रः। म॰। मुखस्य भाव इति।
मुख्यः। यत्। नङा॰। मुख इव मुख्यः।
मूलेमूलेस्थलः। द्विरुक्तः।
मृत्स्ना। सः। नङा। प्रशस्तामृत् इति।
मृत्स्ना। स्नः। नङा। प्रशस्तामृदिति।
मृदुजातीयः। जातीयर्। मृदुप्रकारः इति।
मृदुतमः। तमप्। सर्वेषामतिशयेन मृद्वीति।
मृदुतरः। तरप्। सर्वेषामतिशयेन मृदुरिति।
मृदुत्वम्। त्व। मृदो र्भाव इति।
मेधावी। विनिः। मेधाऽस्यास्तीति।
मैत्रेयः। ढञ्। अप॰। मित्रयोः अपत्यं। मित्रंगच्छतीति मित्र
युः। ढकि मित्रायाः अपत्यं मैत्रेयः बहुत्वे मित्रयवः।
मैनिकः। ठक्॰ ठ॰। मीनान् हन्तीति।
मौञ्जीनम्। खञ्। म॰। मुञ्जानं भवनं क्षेत्रम्।
मौढ्यम्। ष्यञ्। नञ्स्नञ्। मूढस्य भावः इति।
मौनम्। अण्॰। नञ्स्नञ्। मुने र्भावः इति।
मौर्वम्। अण्॰। मा॰। मूर्व्याः विकारः।

मौष्टाः। एत्ः। चा॰। मुष्टिः प्रहरणमस्याः क्रीडायां। सा।
मौष्टिकः। ठक्। मुष्टिना जयतीति।
म्रदिमा। इमनिच्। नपुंसकम्। मृदोर्भावः इति।
म्रदिष्ठः। इष्ठन्। प्रागि॰। सर्वेषामतिशयेन मृदुरिति।
म्रदीयान्। ईयसुन्। प्रागि॰। अयमेषामतिशयेन मृदुरिति।
यतः। तसिल्। प्राग्दि॰। अव्य॰। यस्मादिति।
यत्र। त्रल्। प्राग्दि॰। अव्य॰। यस्मिन्निति।
यथा। थाल्। प्राग्दि॰। अव्य॰। येन प्रकारेणेति।
यदा। दा। प्राग्दि॰। अव्य॰। यस्मिन् काले इति।
यवक्यम्। यत्। म॰। यवकानां भवनं क्षेत्रमिति।
यवमयम्। मयट्। प्रा॰। यवानां विकाररूपम्।
यव्यम्। यत्। छ॰। यवेषु हितं यव्यम्। यत्। म॰। यवा
नां भवनं क्षेत्रं यव्यम्।
यर्हि। र्हिल्। प्राग्दि॰। अव्य॰। यस्मिन् काले। यदा इति।
यविष्ठः। इष्ठन्। प्रागि॰। सर्वेषामतिशयेन युवा इति।
यवीयान्। ईयसुन्। प्रागि॰। द्वाविमौ युवानौ अयमन
योरतिशयेन युवा इति। ईयसुन्।
यशस्यः। यत्। अर्हे। यशसो योग्यो यशस्यः।
यशस्वी। इनिः। प्रा॰। यशोऽस्यास्तीति।
यामुनः। अण्। अप॰। यमुनाया अपत्यम्।
याम्यः। ण्यः। अप॰। यमस्यापत्यादि।
यावकः। वुञ्। प्रा॰। यवभक्तण कर्मको व्रतम्।
यावत्। वतुप्। प्र॰। यत्प्रमाणमस्य तत्।
यावान्। वतुप्। म॰। यत् प्रमाणमस्य।
यावीनम्। खञ्। यवानां भवनं क्षेत्रमिति।

यावीयान्। ईयसुन्। अयमेषामतिशयेनयुवाइति।
याष्टीकः। ईकक्। ठः। यष्टीप्रहरणमस्येति।
यास्कः। अण्। अप०। यस्कस्यगोत्रापत्यमिति।
यास्कायनिः। फिञ्। अप०। यास्कस्ययुवापत्यम्।
यास्कायनीयाः। छः। अप०। यास्कायनेः छात्राः।
यास्कीयाः। छः। अप०। यास्कायनेः छात्राः।
याज्ञिक्यम्। ष्यञ्। शै०। यज्ञिकानांधर्मआम्नायोवा।
युधिष्ठिरः। उणादिः युधिनिष्ठतीति। इञ्। अप०। युधिष्ठिरस्यगोत्रापत्यानि
युष्मदीयः। छः। शै०। युवयोर्युष्माकंवा।
योग्यः। यत्। ठञ्०। योगायप्रभवतीति।
यौगंधरः। अण्०। शै०। युगंधरन्तीति युगंधराः। तत्रजातादिः।
यौगंधरकः। वुञ्। शै०। युगंधरन्तीतियुगंधराः। तत्रजातादिः।
यौगिकः। ठक्। ठञ्०। योगायप्रभवतीति।
योजनिकः। ठञ्। कन्। ठञ्। योजनंगच्छतीति।
यौधिष्ठिरिः। यौधिष्ठिराः। बहुत्वेयुधिष्ठिराः इञः लुक्।
यौधेयः। अञ्। तद्रा०। योधाइवेति। यौधेयौ। बहुत्वेयुधेयः।
यौवतम्। अण्०। शै० युवतीनांसमूहः।
यौवनम्। अण्०। शै०। यूनोभावइति।
यौष्माकः। अण्०। शै०। युवयोर्युष्माकंवा। अयम्।
यौष्माकीनः। खञ्। शै०। युवयोर्युष्माकंवा अयम्।
रजस्वलः। वलच्। रजो य स्यास्तीति रजस्वलास्त्री।
रजस्वला। वलच्। रजोस्यास्तीति।
रथिकः। ठक्। ठः। रथेनगच्छतिचरतिवा।
रथ्यम्। यत्। शै०। रथस्येदम्।

रथ्यः। यत्। शे॰। रथंवहतीति। इति

रथ्या। यः। चा॰। रथानांसमूहः। यत्। आगि॰। रथंवहति

राजकीयम्। छः। शे॰। राज्ञः इदं। राज्ञ आज्ञादिवा।

राजतम्। अञ्। मा॰। रजतस्य विकाररूपम्।

राजन्यः। यत्। अप॰। राज्ञः जात्यपत्यम्।

राजन्यकः। वुञ्। चा॰। राजन्यानां विषयो देशः।

राजन्यकम्। वुञ्। चा॰। राजन्यानांसमूहः।

राजपथः। कन् तद्धा॰ कनोलुक्। रासभकः। अकन्। आ गिवी। रासभ एवेति।

राजभोगिणः। खः। छ। राजभोगार्थेहितः इति।

राजसात्करोति। साति। तद्धा। राज्ञोधीनंकरोतीति।

राज्यम्। यत्॰। नन्स्नत्। राज्ञः कर्म॰ भावोवा।

रामणीयकम्। वुञ्। रमणीयस्य भावः।

रासभकः। कन्स्वार्थे। आगिवी। रासभ एवेति।

रैवतिकः। ठक्। अप। रेवत्याः अपत्यम्।

रोचनिकः। ठक्। चा॰। रोचनेनरक्तः।

रोमशः। शः। म॰। रोमाणियस्यसंतीति।

लघिष्ठः। इष्ठन्। आगि॰। सर्वेषामतिशयेनलघुरिति।

लघीयान्। ईयसुन्। आगि॰। अनयो. र्वायमेषामतिशयेन लघुरिति।

लघुतरः। तरप्। अनयोतिशयेन लघुः इति।

लक्ष्मणः। नः। म॰। लक्ष्मचिह्नंयस्यास्तीति।

लालाटिका। कन्। शै॰। ललाटेभवा। वेदी। वेला।

लालिमा। इमनिच्। तस्न॰ रक्तस्यभावइति।

लावणीकः। ठक्। ठग॰। लवणः पण्यमस्येति।

लातिकः। ठक्। चा॰। लातयाक्रः।
लोमशः। शः। म॰ लोमानियस्यसंस्तीति।
लोहमयम्। मयट्। प्राग्दी॰। लोहस्यविकारः।
लौकिकः। ठञ्। आर्हीं। लोकेविदितःइति।
लौहित्यम्। ष्यञ्। नञ्स्नञ्॰। लोहितस्यभावःष्यञ्वा।
वणिज्यं। यत्। नञ्स्नञ्॰। वणिजोभावःकर्म्मवा।
वत्सलः। लच्। म॰। वत्सकामयते।
वयस्यः। यत्। प्राग्हि॰। वयसातुल्योवयस्यः।
वरिष्ठः। इष्ठन्। प्रागि॰। सर्वेषामतिशयेनवरःइति।
वरीयान्। ईयसुन्। प्रागि॰। अयमेषामतिशयेनवरःइति।
वर्ग्यम्। यत्॰। शै॰। वर्गेभवम्।
वर्णतः। तसिल्। तद्धा॰। वर्णेति।
वर्हिणः। लच्॰। म॰। वर्हाणियेषांसंतीतिवर्हिणः।
वश्यः। यत्। प्राग्हि॰। परेषांवशंगतःवश्यः। पराधीनः।
वासिष्ठाः। अण्। अप॰। वसिष्ठस्यापत्यानि। अत्राणोलोपोवै
वंहिष्ठः। इष्ठन्॰ । सर्वेषामतिशयेनवहुलइति। इत्यर्थे।
वाग्मी। ग्मि॰निट्। म॰। वाक्यस्यास्तीति।
वाङ्मयम्। मयट्। प्रा॰। वाचोविकाररूपमवयववरूपंवा
वाचाटः। आटच्। म॰। वाचानिपुणःइति। असंवद्धंयःव
ड्डभाषतेइतिवा।
वाचालः। आलच्। म॰। वाचानिपुणो। असंवद्धंवहुभाष
तेइतिवा।
वाणिजः। अण्। शै॰। वणिग्भिरागतोदेशः
वाणिज्यम्। ष्यञ्। नञ्स्नञ्॰। वणिजोभावःकर्मवा।
वातकी। इनिः। प्रा॰। वातोऽस्यास्तीति।

वानिकम्। ठक्। आर्ही। वानस्यधामनं कोपनं वा।

वान्तलः। ऊलः। वानानां समूहः। वानं नसहत इति वा

वान्यम्। यः। चा। वातानाम्। समूहः।

वान्यः। यः। चा। वातानां समूहः। आंधीइति।

वात्स्यः। यञ्। अप। वत्सस्यागोत्रापत्यम्। वत्सतेयन्तोत्स

ष्ठिमर्गीः। वत्साः इत्यादि।

वामदेव्यम्। ड्य। चा। वामदेवेन दृष्टं वामदेव्यम्।

वायव्यम्। यत्। चा। वायोरिदं। वायुर्देवतास्येति वा।

वारुचः। अण्। शै। वररुचिनाप्रोक्तम्।

वाराणसेयम्। ढक्। शै। वाराणस्यांजातादिः।

वारुडकिः। इञ्। अप। वरुडस्यापत्यम्।

वारुणम्। अण्। चा। वरुणोदेवताऽस्यहविषः।

वार्त्रः। ण। वृत्तिर्यस्यास्तीति स्त्री चेत् वार्त्री

वार्द्धकम्। वुञ्। चा। वृद्धानां समूहः।

वार्द्धुषिकः। ठक्। ठ। वृद्धोप्रयच्छतीति। ब्याजडीया भाषा

वार्षिकम्। ठक्। शै। वर्षासुसाधुः वर्षेभवं वा।

वार्हस्पत्यम्। अण्। वृहस्पतिर्देवतास्येति। उद्देश्य

विशेषे वार्हस्पतः

वासन्तिकः। ठक्। चा। वसन्तमधीते।

वासन्त्यः। अण्। शै। वसन्तेपुष्प्यन्ति कुन्दादिः।

वासनीयकम्। वुञ्। वसनीयस्यभावः।

वासिष्ठः। अण्। अप। वसिष्ठस्यापत्यम्। वसिष्ठेन दृष्टो

वासिष्ठोमन्त्रो वा।

वासिष्ठम्। अण्। चा। वसिष्ठेन दृष्टं साम वासिष्ठम्।

वास्त्रायः। अण्। चा। वस्त्रैः परिवृतोरथः।

वाहवि:। इञ्। अप॰। वाहोरपत्यमिति।
वाहीक:। ईकक्। अप॰। वहिष: अपत्यादि।
वाह्य:। यञ्। अप॰। वहिर्भव: वाह्य:।
विक्रयिक:। ठन्। ठ॰। विक्रयेण जीवति।
विधिवत्। वति:। नञ्स्न॰। विधिमर्हतीति।
विद्वत्कल्प:। कल्पप्। प्राग्इवी॰। ईषद्नो विद्वानिति।
विद्याचणः। चणप्। म॰। विद्यया वित्त इति।
विद्याचंचुः। चंचुप्। म॰। विद्यया वित्तः इति।
विप्र सात्करोति। साति: तद्राज॰। विप्राधीनं करोति।
विंश:। डट्। म॰। विंशते: पूरक: विंश:।
विंशक:। डुवन्। आर्ही। विंशत्या क्रीत:।
विप्रालम्। शालच्। नञ्स्न॰। विप्रोक्षेण शोभते भवति वा।
विश्वजनीनम्। ख:। छ:। विश्वजनेभ्यो हितमिति।
विश्वजनीयम्। छ:। छ:। विश्वजनेभ्यो हितम्।
विंशतितम:। तमट्। विंशते: पूरण:।
विषममयम्। मयट्। पौ॰। विषमादागतं विकारो वा।
विषमरूप्यम्। रूप्य:। पौ॰। विषमादागतम्।
विषमीयम्। छ:। पौ॰। विषमादागतम्।
वृंदारक:। आरकन्। अप॰। वृंद मस्यास्तीति वृंदारक:।
वृन्दीयान्। ईयसुन्। प्राग्॰। अयमेषामतिशयेन वृन्दारक इति।
वृत्तक:। अकच्। प्राग्इवी॰। वृत्तपवेति।
वैदारिकम्। ठञ्। चा॰। विदाराणां समूह:।
वैदिशम्। अण्। चा॰। विदिशाया: अदूरभवम्।
वैदिका। निठ्। पौ॰। वेद्यां जातादि।

वैदिकी। ठञ्। शै०। वेदांजानाति।
वैनसान। ङमठष। चा०। वेनसानिसंत्यस्मिन्।
वैत्रकीयम्। छण्। शै०। वेत्रस्येदं। जानातिवा।
वैदम्। अण्। शै०। विदेभ्यआगतं। अञ्। शै०। वेदःसंहोअं
कोघोषोवा। इति वैदं। विद्वं
वैदर्भी। अण्०। अप०। विदर्भाणांदेशानाम्।राज्ञी
वैदेहः। अञ्। अ०। विदेहस्यापत्यमिति।
वैदूर्यः। ञ्यः। शै०। विदूरात्भवति।
वैनतेयः। ढक्। अप०। विनतायाअपत्यम्।
वैमात्रेयः। ढक्। अप०। विमातुरपत्यमिति।
वैल्वः। अण्०। मा०। विल्वस्यविकारः अवयवोवा।
वैयाकरणः। अण्। चा०। व्याकरणमधीतेवेदवा।
वैयाकरणपाशः। पाशप्। कुत्सितोवैयाकरणः।
वैयासकिः। इञ्। अप०। व्यासस्यापत्यम्।
वैयाघ्रः। अञ्। चा०। आपीव्याघ्रस्यविकारः वैयाघ्रं तेन
परिवृतः वैयाघ्रः।
वैरम्। अण्०। तत्स्व। वीरस्यभावःकर्मच।
वैम्बकिः। इञ्। विंबायाअपत्यम्।
वैंशतिकः। ठक्। ठग०। विंशतिंप्रयच्छति।
वैंशतिकम्। ठञ्। विंशत्याक्रीतमिति।
वैश्वामित्रः। अण्। अप०। विश्वामित्रस्यापत्यम्।
व्यावहारिकः। ठक्। ठ०। व्यवहारेणचरति। आचरति।
शंकव्यम्। यत्। छ। शंकवेहितमिति। दारुकाष्ठम्।
शतकम्। वुञ्। चा०। शतस्यसमूहः।
शततमः। तमट्। म०। शतस्यपूरणःइति।

शानधा। धा। प्रागि०। शानप्रकारम्।
शानरुद्रियम्। ञः। चा०। शानेरुद्राःदेवताग्रस्येति।
शानरुद्रीयम्। छः। चा०। शानेरुद्राःदेवताग्रस्येति।
शानिकम्। कन्। आर्ही। शानेनक्रीतं इति।
शानिकः। ठन्। प्रा०। शानेनक्रीतः।
शान्यः। यत्। प्रा०। शानेनक्रीतः।
शान्यम्। यत्। प्रा०। शानेननीतम्।
शाव्दचंचुः। चंचुप्। शाव्देनवित्तइति।
शामीरः। रक्। प्रागिवी०। अल्पाशामी।
शारण्यः। यत्। प्राग्हि। शारणेसाधुःइति।
शारभकः। अकच्। शारभएव।
शारमयम्। मयट्०। प्रा०। शाराणांविकारअवयवं वा शारमयं।
शार्करा। मत्वर्थे तुपि म०। शार्कराअस्त्यस्मिन्।
शाकटः। अण्०। प्राग्हि०। शाकटंवहतीति। वृषः महिषोवा।
शाकटिकः। ठन्। ठ०। शाकटेनगच्छतीति।
शाकलः। ठक्। चा०। शाकलेनरक्तः। शाकलिकोपिभवति।
शाक्तीकः। ईकक्। ठ०। शाक्तिःप्रहरणमस्येति।
शाख्यः। यत्। तद्राजा। शाखेवेति।
वा शाद्वलम्
शाड्वलः। ड्वलच्। म०। हरितशादविशिष्टः। शादोऽस्त्यस्मिन्।
शातमानम्। अण्०। आर्ही०। शतमानेनक्रीतमिति।
शाब्दिकः। ठक्०। ठ०। शब्दंकरोतीति। गर्दभः।
शामीलम्। ञन्। शम्याःविकारःरूपंभस्म। शम्या अवयवरूपं शामीलीस्त्रुक्।
शारदम्। अण्०। शै०। शरदिभवम्।
शारीरिकम्। ठक्। ठ०। शरीरेभवम्।

शारदाः। अण्। शै०। शरदि पच्यंते सूर्येण कालेन वा।

शारद्वतायनः। फक्। अप०। शारद्वतो गोत्रापत्यं शारद्वतायनः भार्गवश्चे अन्यः शारद्वतः।

शारीरकीयः। छः। शै०। शारीरकमधिकृत्य कृतो ग्रंथः।

शार्करम्। अण्। चा०। शर्करा अस्यास्मिन्।

शार्करिकम्। ठक्। चा०। शर्कराः संत्यस्मिन्।

शार्करीयम्। छः। शै०। शर्कराः संत्यस्मिन् इति।

शालम्। अण्। चा०। शालायाः इदम्।

शालीयः। छः। शै०। शालायां भवः।

शालेयम्। ढक्। म०। शालीनां भवनं क्षेत्रं इति।

शाल्वेयः। ढक्। अप०। शाल्वस्यापत्यम्।

शांशपः। अञ्। शै०। शिंशिपायाः विकारः।

शिखावलम्। वलच्। चा०। शिखा अस्यास्मिन्।

शिखावलः। वलच्। म०। शिखा अस्यास्तीति।

शिल्पी। इनिः। म०। शिल्पमस्यास्तीति।

शीतालुः। आलुच्। म०। शीतं न सहते इति।

शीर्षछेद्यः। यत्। छ०। शीर्षछिंदंति इति।

शीर्षम्। यत्। म०। शीर्षभवम्।

शुक्रियम्। घन्०। चा०। शुक्रो देवतास्येति।

शुक्लशुक्लः। द्विरुक्तः पटः।

शुक्लशुक्लम्। द्विरुक्तम् रूपम्।

शुक्लिमा। इमनिच्। तन्नान्०। शुक्लस्य भावः इति।

शुक्लीकृतः। च्विः। तद्भा०। अशुक्लः शुक्लः संपद्यते इति अत्र दीर्घोऽपि।

शुचीकृतः। च्विः। तद्भा०। अशुचिः शुचिर्भवतीति।

शूद्रकः। कन्स्वार्थे। प्राणिवी। शूद्रपवेति। कस्य
शूरसेनिः। इञ्। शूरसेनस्यायम्।
शूल्यम्। यत्। वा। शूलेसंस्कृतं मांसादिकम्।
शृंगारकः। आरकन्। शृंगं यस्यास्तीति।
शृंगाटी। आ टच्। शृंगं यस्याः सा। गौः। माद्यादि।
शैवः। अण्। अप। शिवस्यापत्यम्। अण्। वा। शिवीनांनि
वासे। विषयोदेशोवा।
शैवपुरम्। अञ्। शै। शिवेभवं जातादिवा।
शैलेयम्। ढञ्। नद्यादि। कनोलुक्। शिलेवशैलेयम्
शिलेयम्।
शौक्ल्यम्। यञ्। शुक्लस्यभावः।
शौचम्। अण्। नञ्तञ्। शुचेर्भावः कर्मवा।
शौकल्यम्। ष्यञ्। नञ्तञ्। शुक्लस्यभावःइति।
शौंडिकः। अण्। शै। शुंडिकादागतः।
शौनकायनः। फक्। अप। शौनकस्यगोत्रापत्यम्। वात्स्य
अन्त। शौनकोन्यः।
शौभ्रेयः। ढक्। अप। शुभ्रस्यापत्यम्।
शौरिः। इञ्। अप। शूरस्यापत्यम्।
शौवस्तिकम्। ठ श्वः आगामिदिनेजातादि।
श्यामः।
श्यामिष्ठः। इष्ठन्। प्र। सर्वेषामतिशयेनश्याम इति।
श्यामीयान्। ईयसुन्। प्र। अयमेषामतिशयेनश्याम इति।
श्येनंपाता। ञः। श्येनस्यपातोस्यां क्रीडायांश्येनंपातायां
या।
श्रद्धालुः। आलुच्। म। श्रद्धायस्यास्तीतिस्वभाववान्
श्राद्धः। णः। म। श्राद्धमस्यास्तीति स्त्रीचेत्। श्राद्धी।
श्राद्धिकः। ठन्। म। श्राद्धमनेनभुक्तमिति।

आर्द्री। इनिः। म०। आर्द्रोस्यास्तीति।
आर्द्रीयः। छ। चा०। आर्द्रस्ययोग्यः
आयम्। अण्। चा०। श्रीर्देवतास्येति।
आयसम्। अन्। शे०। श्रेयसिभवम्।
श्रावणः। श्रावणी पौर्णमासी यस्मिन्मासेसः। अण्। चा०।
अण्। पौ०। श्रवणेनयुक्तेइति।
श्रावणिकः। ठक्। चा०। श्रावणीपौर्णमासीयस्मिन्मासेसः
श्रावणी। अण्। चा०। श्रवणेनयुक्तापौर्णमासीश्रावणी।
श्रेयान्। ईयसुन्। सर्वेषामतिशयेनश्रेष्ठइति।
श्रेष्ठः। इष्ठन्। प्रशस्य सर्वेषामतिशयेनप्रशस्य इति।
श्रेष्ठता। तल्। श्रेष्ठस्यभावः।
श्रेष्ठ्यम्। ष्यञ्। श्रेष्ठस्यभावः।
श्लैष्मिकम्। ठक्। आर्हो। श्लेष्मणःशमनंकोपनंवा।
श्वस्तनम्। ट्यु। ट्युल्। द्वौ। शैषिकौ। आगामिदिनेजातादि।
श्वस्त्यम्। त्यप्। शै०। आगामिनिदिनेजातादि।
श्वेतिमा। इमनिच्। श्वेतस्यभावइति।
श्वेतिष्ठः। इष्ठन्। श्व सर्वेषामतिशयेनश्वेतइति।
श्वैत्यम्। ष्यञ्। श्वेतस्यभावःइति।
षष्ठः। डट्। म०। षण्णांपूरणःषष्ठइति। ष्ट्र। प्राग्दी०।
षष्ठोभावःइति।
षष्टिकम्। यत्। म०। षष्टिकानांभवनंक्षेत्रमिति।
षष्टितमः। तमट्। म०। षष्टेःपूरकःइति।
षाड्गुण्यम्। ष्यञ्। नन्द्यन्। षड्गुणस्यभावइति।
षाण्मातुरः। अण्। अप०। षण्णांमातॄणामपत्यम्।
षाण्मासिकः। ठञ्। ठञ्। षण्मासेभवनीतिषाण्मासिक उत्सवः।

षाण्मास्यः। यत्। ठञ्। षण्मासेभवः इति।
षाष्ठः। नः। प्रागिवी। षष्ठोभागः।
सख्यम्। यत्। नन्स्त्रम्। सख्युःभावः इति। यः। इति।
संकटम्। कटच्। नन्स्त्रम्। सम्यक् उःखयतीति।
सतीर्थ्यम्। सतीर्थ्यः। यः। प्राग्हितो। समानेतीर्थेवसति इति।
सहाध्यायी। तीर्थंगुरुगृहम्।
सदा। दा। प्राग्दि। अव्य। सर्वस्मिन्कालेइति।
सद्यः। द्यस्। प्राग्दि। अव्य। समाने अहनि इति शीघ्रम्।
सपदः। यत्। नन्स्त्रम्। सपदितत्क्षणेभवतीति
सप्ततिकः। ठन्। आर्हीं। सप्तत्याक्रीतः इति।
संभवीयम्। छः। शै। संभवयोग्यम्।
संमुखीनः। खः। म। सर्वस्यमुखस्यदर्शनः इति।
समजातीयः। जातीयर्। समप्रकार इति।
सममयम्। मयट्। शै। समस्यविकारः। समादागतंच।
समरूप्यम्। रूप्यः। शै। समादागतंसमरूप्यम्।
समानोदर्यः। यः। प्राग्हि। समानेउदरेशयितः। सहोदरः।
सर्वजनीनः। खः। छ। सर्वजनेभ्योहितः। *सर्वकर्मीणः। खः। म। सर्वकर्माणिव्याप्नोतीति।
सर्वतः। तस्। प्राग्दि। अव्य। सर्वेभ्यः इति।
सर्वत्र। त्रल्। प्राग्दि। अव्य। सर्वस्मिन्निति।
सर्वथा। थाल्। प्राग्दि। अव्य। सर्वप्रकारेणेति।
सर्वदा। दा। प्राग्दि। अव्य। सर्वस्मिन्कालेइति।
सर्वधुरीणः। खः। प्राग्हि। सर्वधुरंवहतीति।
सर्वपथीनः। खः। म। सर्वकर्म्माणिव्याप्नोतीति।
सर्वपात्रीणः। खः। म। सर्वपात्राणिव्याप्नोतीति।
सर्वसुखीनः। खः। म। सर्वस्यमुखस्यदर्शनः।

सार्षपतैलम्। तैलञ्। म०। सर्षपानांस्नेह इति। *सदृशी। इनि। म। सदृ समस्याक्षीति
सांकाश्यम्। ण्यः। चा०। संकाशाददूरभवम्।
साङ्कूकम्। ठक्। सङ्कूनांसमूहः।
सावेयम्। ढञ्। चा०। सख्योनिर्वृत्तम्।
साधिष्ठः। इष्ठन्। प्रशस्येबामतिशयेनबाढः इति।
सांधिवेलम्। अण्। शै०। संधिवेलायांभवम्।
साधीयान्। इयसुन्। प्रागि०। सर्वेषामतिशयेनासाधुः।
सान्निध्यम्। ष्यञ्। नञ्ज्ञञ्। सन्निधेःभावइति।
सान्निपातिकम्। ठञ्। ठ०। सन्निपातेवनिर्वृत्तमिति।
सामयिकम्। ठञ्। ठञ्०। समयःप्राप्तोऽस्येति।
सामाजिकः। ठक्। ठ०। समाजंरक्षतीति।
साम्राज्यः। ष्य। अप। सम्राजांपदम्।
सामीप्यम्। ष्यञ्। नञ्ज्ञञ्। समीपस्यभावः।
सामुद्रिकः। ठक्। ठ०। समुद्रेनसमवेतः।
सायंतनम्। ट्युल्। ट्यु०। शै०। संध्यायांभव
सांयुगीनः। खञ्। प्राग्घि। संयुगेसाधुः।
सार्वजनीनः। खञ्। प्राग्घि। सर्वजनंप्रतिसाधुः।
सार्वभौमः। अण्। प्राग्दी। सर्वस्याःभूमेःनिमित्तं। संयोगः। उत्पातः। राज्यंवा।
सार्वभौमी। स्त्रियां। सर्वस्याःभूमेराज्ञी।
सार्वम्। अण्। ञ्य। सर्वस्मैहितं।
सार्वीयम्। खञ्। छ। सर्वस्मैहितमिति।
सार्षपम्। अण्। म०। सर्षपस्यइदं। सार्षपतैलम्।

सांवत्सरिकम्। ठञ्। शै०। संवत्सरेभवं। संवत्सरेदेयमृणंवा।
सांवत्सरकम्। वुञ्। शै०। संवत्सरेयज्ञकरणम्।

सारूप्यम्। ष्यञ्। नन्त्र॰। सरूपस्य भावः।
साहदेवः। अण्। अप॰। सहदेवस्यापत्यम्।
साहसिकः। ठक्। ठ॰। सहसा अविचार्य अविचारात् नयावर्त्तते इति।
साहायकम्। वुञ्। नन्तन्। सहायकस्य भावः।
साहाय्यम्। ष्यञ्। नन्तन्। सहायकस्य भावः।
साली। इनिः। म॰। सालात्कृष्टेति।
सिंहकः। कः स्वार्थे। स्वागेवी। सिंहएव सिंहकः।
सीत्यम्। यत्। स्वाम्वि। सीतया हलेन समितं। इति।
सुखी। इनिः। म॰। सुखमस्यास्तीति।
सुगंधिः। इत्। सुरभिगंधोयस्येति कल्याणोगंधोयस्य
सुषिरः। रः। म॰। सुषिरेव सुषिरः सुषिच्छिद्रम्।
सुष्ठुतराम्। आम्। सुष्ठुतरमेवेति। अव्य॰।
सैनापत्यम्। ष्यः। नन्तन्। सेनापतेर्भावः। अत्रयकवा सेनापतेः भावइति। यञ्वा।
सैनिकः। ठक्। ठ॰। सेनयासमवेतः।
सैंधवः। अण्। शै॰। सिंधुदेशेभवः। अभ्यादिः। सिंधुदेशः अभिजनोयस्य।
सोदर्यः। यत्। आम्वि॰। समाने उदरे वसतीति इति।
सौदामनी। अण्। शै॰। सुदाम्नापर्वतेनएकदिक्।
सौधातकिः। इञ्। अप॰। सुधातुरपत्यम्।
सौपर्णेयः। ढक्। अप॰। सुपर्णाया अपत्यमिति।
सौपः। अण्। शै॰। सुपांव्याख्यानग्रन्थः।
सौभाग्यम्। ष्यञ्। सुभगस्य सुभगाया वा भाव इति।
सौभद्रः। अण्। चा॰। सुभद्रनाप्रयोजनमस्य।
सौभागिनेयः। ढक्। अप॰। सुभगाया अपत्यं। सुहृभगिन्या अपत्यंवा।

सौमित्रिः। इञ्। अप०। सुमित्राया अपत्यमिति।
सौमी। ऋतिः। म०। सोमो देवता अस्याः सौमी ऋक्।
सौम्यम्। यण्०। चा०। सोमो देवतास्येति।
सौरभेयः। ढक्०। अप०। सुरभेरपत्यं ढक्।
सौरभेयी। अण्०। सुरभ्याः अपत्यादि।
सौर्मसः। अण्०। अप०। सुर्मसदेशस्य राजा। सुर्मस्यापत्यम्।
सौवीरः। ण०। अप०। सुवीरदेशोद्भवः।
सौवीर्यः। ष्यङ्०। अप०। सुवीराणां राजा। सुवीरस्यापत्यं वा।
सौस्नातिकः। ठक्०। ठ०। सुस्नातं पृच्छति य
सौहार्दम्। अण्०। नञ्स्नञ्। सुहृदो भावः।
सौहार्दः। अण्। अप०। सुहृदः अपत्यम्।
स्त्रीता। तल्। नञ्स्नञ्। स्त्रियः भावः इति।
स्त्रीत्वम्। त्व। नञ्स्नञ्। स्त्रिया भावः इति।
स्त्रीवत्। वत्। मतुप्। स्त्रिया इव।
स्तेयम्। यत्। नञ्स्नञ्। स्तेनस्य भावः कर्म वा इति नलोपश्च।
स्त्रैणः। नञ्। अप। स्त्रियां भवः। स्त्रियाः अधीनः। स्त्रियाः अयम्।
स्त्रैणम्। नञ्। नञ्स्नञ्। स्त्रियो भावः इति।
स्थविमा। इमनिच्। स्थूलस्य भाव इति।
स्थविष्ठः। इष्ठन्। प्रागि०। सर्वेषामतिशयेन स्थूल इति।
स्थूलकः। कन्। तद्रा। स्थूल इव प्रतिकृतिः।
स्थेयान्। ईयसुन्। प्रागि०। अयमेषामतिशयेन स्थिर इति।
स्थेष्ठः। इष्ठन्। सर्वेषामतिशयेन स्थिरः इति।
स्रग्वी। विनिः। स्रगस्यास्तीति।
स्वर्ग्यः। यत्। प्राग्घि। स्वर्गस्य योग्यः इति।
स्रौघ्नः। अण्। शै० स्रुघ्नदेशे भवः आगतो वा। स्रुघ्नादागतो वा। स्रु

स्रुघ्नं गच्छति। स्रौघ्नः पन्था। दूतो वा। स्रुघ्नं अभिनि
ष्क्रामति कान्यकुब्जद्वारं। स्रुघ्नो निवासोस्य सः।
स्रुघ्नो अभिजनोस्य। यत्र स्वयं वासः स निवासः।
यत्र पित्रादीनां निवासो भवत्सोभिजनः स्रुघ्नः
भक्तिः भागोस्य।
स्थंडिलः। अण्। चा। स्थंडिले भवः।
स्थविष्ठः। इष्ठन्। प्रागि। सर्वेषामतिशयेन स्थूल इति।
स्थाविरम्। अण्। स्थविरस्य भावः इति।
स्थूलकः। कन्। तद्राजा। स्थूल एव स्थूलकः।
स्वतिः। इतच्। स्वो जातोयस्य।
स्वस्रीयः। छः। अप। स्वस्रपत्यम्।
स्वागतिकः। ठक्। ठ। स्वागतमित्याह एः।
हरिष्ठः। इष्ठन्। प्रागि। सर्वेषामतिशयेन हरितः इति।
हरीतक्यः। अपट्। प्रा। हरीतक्याः फलानि हरीतक्य।
हल्यः। यत्। प्राग्वि। हलस्य कर्षः इति।
हल्या। यत्। प्राग्वि। कर्षितं योग्याभूः।
हविष्यम्। यत्। छः। हविषे हितमिति। घृतम्।

हस्तिद्वयसम्। हस्तिद्वयसम्। प्रमाणमस्येति।
हली। इनिः। म। हलः मुंडोस्यास्तीति।
हस्त्यम्। यत्। ठञ्। हस्तेन दीयते इति।
हारितः। अञ्। अप। हरितापत्यम्।
हारिद्रम्। अञ्। अ। हरिद्रयारक्तं वस्त्रम्।
हारि[illegible]। [illegible]। [illegible]स्यापत्यम्।
हारिषे[illegible]। हरिषेणस्यापत्यम्। इञ्। हारिषेणीः।

हालिकः। ठक्। प्राग्वि॰। हलं वहतीति। वृषः महिषो वा।
हालिकम्। ठक्। चा॰। हलिनीनां समूहः।
हिमेलुः। एलुः। हिमं न सहते इति।
हिरण्यवः। वः। हिरण्यं यस्यास्तीति।
हृद्यः। यत्। प्राग्वि॰। हृदयस्य प्रियः वशाकिरणमंत्रादि।
ह्यस्तनम्। ट्यु॰। ट्युल्॰। ङी। शैषिकी। पूर्वेने जातादि।
ह्यस्त्यम्। त्यप्। शै॰। ह्यः पूर्वदिने जातादि।
हेमंतः। अण्। शै॰। हेमंते साधुः।
हैमंताः। अण्। शै॰। हिमंते उत्पंने।
हैमवती। अण्। शै॰। हिमवतः प्रभवति॰।
हैयंगवीनम्। खञ्। म॰ स्यः गोदोहस्य विकारः इति। उक्त
ते इति दोहः।
ह्रसिष्ठः। इष्ठन्। प्राग्वि॰। सर्वेषामतिशयेन ह्रस्व इति।
ह्रसीयान्। ईयसुन्। प्रा॰। अयमेषामतिशयेन ह्रस्व इति।
क्षत्रियः। घः। अप॰। क्षत्रियस्य जात्यपत्यम्।
क्षात्रिः। इञ्। अपत्ये। क्षत्रस्यापत्यम्।
क्षेपिष्ठः। इष्ठन्। सर्वेषामतिशयेन क्षिप्र इति।
क्षेपीयान्। ईयसुन्। प्रा॰। अयमेषामतिशयेन क्षिप्र इति
क्षैरेयी। ढञ्। चा॰। क्षीरेण संस्कृता।
क्षोदिष्ठः। इष्ठन्। प्राग्वि॰। सर्वेषामतिशयेन क्षुद्र इति।
क्षोदीयान्। ईयसुन्। प्राग्वि। अयमेषामतिशयेन क्षुद्र इति।
क्षौद्रम्। अण्। शै॰। क्षुद्राभिः मक्षिकाभिः कृतम्।
क्षानेयम्। ढक्। ना॰। क्षानेर्भाव इति।

इति तद्धितः।

